TRIVANDRUM SANSKRIT SERIES

No. CXXII.

Sri Citrodayamañjarī

No. XI.




# प्रबोधचन्द्रोदयम् ।

# PRABODHACANDRODAYA

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE

TRIVANDRUM: PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS, 1936.

TRIVANDRUM SANSKRIT SERIES.
No. CXXII.
Śrī Citrodayamañjarī.
No. XI.

# THE PRABODHACANDRODAYA

OF

Kṛṣṇamiśrayati

WITH THE COMMENTARY NĀṬAKĀBHARAṆA

BY

ŚRĪGOVINDAMṚTABHAGAVĀN

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCOR.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1936.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२२.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः ११.

---

श्रीकृष्णमिश्रयतिप्रणीतं

# प्रबोधचन्द्रोदयं

श्रीगोविन्दामृतभगवत्कृतया

नाटकाभरणाख्यव्याख्यया

समेतम्

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः ११११. क्रैस्ताब्दाः १९३६.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

Prabodhacandrodaya of Kṛṣṇamiśra Yati is now published with the commentary Nāṭakābharaṇa of Govindāmṛta Bhagavān, a disciple of Paramahamsaparivrājaka Prakāśatīrtha. Though the work is written in easy and elegant language, the subject matter being the essence of Vedānta system of philosophy, requires more than one commentary for its elucidation. An erudite commentary on the work like a staff to old men will indeed be of great help to students, lest the apparent simplicity of language should conceal the depth of philosophic thought embedded therein. The text contains many variant readings caused by commentators of different taste or actually by the author himself, and this commentary will be of great use to those who are in need of suitable elucidation of the text. An edition of this work has been published by the Nirnayasagar Press, Bombay with two commentaries Candrikā and Prakāśa and a comparison of the readings in that edition shows that the commentary Nāṭakābharaṇa now published is invaluable one on the work. Take for instance the following verse in the two editions,

विद्याप्रबोधोदयजन्मभूमि-
वाराणसी ब्रह्मपुरी निरत्यया ।
असौ कुलोच्छेदविधिं चिकीर्षु-
र्निवस्तुमत्रेच्छति नित्यमेवम् ॥

(Nirnayasagar edition p. 63.)

विद्याप्रबोधोदयजन्मभूमि-
वाराणसी ब्रह्मपुरी दुरत्यया ।
असौ कुलोच्छेदविधिं चिकित्सु-
र्निवस्तुमत्रेच्छति नित्यमेव ॥ (p. 52)

Here in the place of चिकित्सुः in the third line, the Nirnayasagar edition reads चिकीर्षुः which is obviously inappropriate to the context. For, according to the latter reading, the verse would mean that Mahāmohā, with a view to cause obstruction to Viveka, desires to reside in Benares by way of bringing ruin to his family, which is, on the face of it, wrong. Even if we take असौ to refer to Viveka, how could Viveka work for the extinction of his family? The proper reading should be चिकित्सुः as is adopted by our commentator. A perusal of the commentary shows that many similar readings quite appropriate to the text are embodied in it,

Though the commentator, like the author of the work, treats of the doctrines of the Vedānta philosophy, he seems to belong to the Vaiṣṇavite persuasion. The author Kṛṣṇamiśra is known to have lived in the 11th century A. D. and his work was so popular as to have induced the great Vedānta Deśika to write on that model a drama named Saṅkalpasūryodaya. The great poet Śrī Harṣa who flourished in the 12th century A. D. and Mādhavācārya who lived in the 14th century A. D., are indebted to the author of the Prabodhacandrodaya, for the Śloka,

"अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥" (p. 60)

occurring in the Probodhacandrodaya has been adapted by Śrī Harṣa with slight variation in his Naiṣadhīyacarita thus:

"अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् ।
प्रज्ञापौरुषहीनानां जीवो जल्पति जीविकाम् ॥" (17.39.)

While it is similarly copied by Mādhavācārya in the Cārvākadarśana of his Sarvadarśanasaṅgraha. Again the verse,

"त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥" (p. 58)

found in the Probodhacandrodaya is also copied likewise in the Cārvākadarśana of the Sarvadarśanasaṅgraha. On a comparison of the text of the present edition with that of the Nirnayasagar, it is clear that one contains a few verses that do not exist in the other, one omits a few other verses found in the other and while a few metric passages occurring in the one are found as prose passages in the other. For instance, the two verses 'पूर्वं तावद्विवेकम्' (p. 209.) and 'संसारापारम्' (p. 209) explained in the Nāṭakābharaṇa are omitted in the Nirnayasagar edition. The verse 'निहतस्य' (p. 72) in that edition does not find a place in the present edition probably because of its inappropriateness to the context. Besides, the verse is an interpolation as it is not explained by the commentaries in the Nirnayasagar edition. The verse 'विसआणन्द' (p. 80) has been taken by mistake for a prose passage and printed as such in the Nirnayasagar edition. (p. 91)

Nothing definite has been known about the author of the commentary Nāṭakābharaṇa. From the colophons, however, occurring at the end of each act 'इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृतभगवता कृते नाटकाभरणे' it is learned that his name was Govindāmṛta Bhagavān and that he was a disciple of Prakāśatīrtha. As, however, he quotes at the outset of his commentary the verse,

"स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥"

which is recited on all ceremonial occasions throughout the Tamil country, he seems to belong to southern India and is familiar with the manuals of domestic rituals that were written long after the original sūtras were composed. As he writes an easy and elegant style and is free from pedantry that is commonly found in the commentaries on the Vedāntaparibhāṣa and other works, he seems to be not a very late author. From the dignified nature of the commentary, it seems that the commentator has ventured not only to explain the drama, but also to check the proselytising tendencies of Buddhism and other corrupt religions that were lingering in his time. From these data which are of a tentative nature and can be set aside when a more cogent reasoning is forthcoming, the commentator may be taken to a period not later than 16th century A. D.

The edition of the work is based on the following five manuscripts :—

1. क. Belonging to Manalikkara Matam, S. Travancore.
2. ख. Do. M. R. Ry. Padmanabhan Tampi Avl., Artist, Trivandrum.
3. ग. Do. Bramhasri Vasudevan Nampurippad, Avl., Aghora Manakkal.
4. घ. Do. M. R. Ry. Narayanan Narayanan Elayathu Avl., Vemlanattillam. Ambalapuzha.
5. ङ. Do. Brahmasri Kunjan Namburippad Avl., Chittur Manakkal, Alwaye.

All these manuscripts are in good condition and our heartfelt thanks are due to the owners who have preserved them carefully. That an edition of the work with commentary Nāṭakābharaṇa based on these mss. is now placed before the public is a matter of extreme gratification to me.

Trivandrum,
20-11-1936.

K. SĀMBAŚIVA ŚĀSTRI.

॥श्रीः॥

# निवेदना ।

---

**इदं प्रबोधचन्द्रोदयस्य श्रीकृष्णमिश्रयतिविरचितस्य** श्रीमत्परमहंसपरिव्राजकश्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण **गोविन्दामृतभगवता कृतया नाटकाभरणव्याख्यया समेतस्य प्रकाशनम्** । मधुरमधुरया शैल्यापि वेदान्तार्थतत्त्वनिगमनपरे प्रबोधचन्द्रोदये प्रतिपाद्यमानोऽर्थो वस्तुमहिम्ना बाढं निष्कृष्टा नैका व्याख्याः समपेक्षत इति निश्चप्रचम् । असाक्षात् प्रतिपाद्यमानं तत्त्वं मुखतः स्थितो मधुरिमा मापहार्षीदिति कूलङ्कषा व्याख्या यष्टिरिव वृद्धस्य परिशीलनपरस्य सुदृढमवलम्बाय महते । भिन्नरुचिवशाद् व्याख्यातृभिः परिकल्प्यमानाः परमार्थतो नाटककविनैव समुट्टङ्किता वा पाठा नैके प्रादुष्षन्ति । अतोऽत्र नाटके कृतपदैः समुचितस्य विवरणस्य समुत्कण्ठमानैर्ग्लमिदमाभरणमुपशान्तये ध्रियमाणम् । निर्णयसागरमुद्रणयन्त्रालयात् चन्द्रिकया प्रकाशेन च व्याख्याभ्यां मुद्रितस्य सम्प्रति प्रचञ्चूर्यमाणस्य पुस्तकस्य दिशा बहव इह सन्ति विमर्शनीयाः पाठा विचारसहचेतसां ग्राह्याः, यत एतदाभरणमवश्यमस्य नाटकस्य भविता किमप्यद्वितीयं व्याख्यानम् । स्थालीपुलाकन्यायेन विरुद्धं किञ्चित् स्थलमुद्धृत्य प्रदर्श्यते निर्णयसागरीयः पाठः —

"विद्याप्रबोधोदयजन्मभूमि-
वाराणसी ब्रह्मपुरी निरत्यया ।
असौ कुलोच्छेदविधिं चिकीर्षु-
र्निर्वस्तुमत्रेच्छति नित्यमेवम् ॥"

(अङ्कः २. श्लो० १२.)

नाटकाभरणीयः पाठः —

"विद्याप्रबोधोदयजन्मभूमि-
र्वाराणसी ब्रह्मपुरी दुरत्यया ।
असौ कुलोच्छेदविधिं चिकित्सु-
र्निर्वस्तुमत्रेच्छति नित्यमेव ॥"

(अङ्कः २. श्लो० १२.)

महामोहस्य वाराणस्यां सर्वात्मनावस्थानस्य विवेकोपरोधं कारणं सिषाधयिषोः कुलोच्छेदविधिचिकित्साचिकीर्षयोः कतराभ्यर्हितेति विचारयतामिद-

मपरोक्षम् । अदसा महामोहे भ्रियमाणे स्वकुलोच्छेदकाङ्क्षा कथङ्कारं घटताम् । यदि पुनर्विवेकोपरोधपदादेकदेशस्य विवेकस्यादसा परामर्शस्तदापि स वा कथं स्वकुलोच्छेदाय यतताम् । एवमाद्यनेका मूलकारसिद्धान्तानुगुणाः पाठा बहव इह समुचितं समुल्लिखिता मन्ये विदुषां सन्तोषाय सम्पत्तारः । मूलकार इव कविराभरणकारोऽपि काममद्वैतसिद्धान्तस्थापितान् सिद्धान्तान् सङ्गृह्णानोऽपि वैष्णवसिद्धान्तादप्रच्युतः प्रतिभाति । मूलकवयश्च श्रीकृष्णमिश्रयतिप्रवराः क्रिस्त्वब्दीयैकादशशताब्द्यां लब्धविजया इति चरित्रस्थितिः । जितं चानेन प्रबोधचन्द्रोदयेन, यद् वेदान्तदेशिकाचार्यचरणानां सङ्कल्पसूर्योदयस्य मातृकाभूयमवाप्य विचित्रः खलु वैखरीविलासः प्राकाशि । महाकविश्रीहर्षस्य द्वादशशतकजीविनः, श्रीमाधवाचार्यस्य चतुर्दशशतकाविजयिनश्च काममेते चन्द्रोदयप्रभवः कवयः स्वयमुपजीव्या अपि व्यजयन्त । तथाहि नैषधे श्रीहर्षः —

"अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् ।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविकाम् ॥"

(स० १७. श्लो० ३९.)

प्रबोधचन्द्रोदये —

"अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥"

(अङ्कः २. श्लो० २५.)

सर्वदर्शनसङ्ग्रहेऽपि तुल्यमेव चार्वाकदर्शने । प्रबोधचन्द्रोदये —

"त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥"

(अङ्कः २. श्लो० २२.)

तुल्यमेव सर्वदर्शनसङ्ग्रहेऽपि चार्वाकदर्शने । एवं विचिन्त्यमाने चन्द्रोदयीयपाठे स्वस्मिन्नेव व्याख्यातृरुचिभेदात् क्वचिदधिकं क्वापि रिक्तं कुत्रचित् पद्यस्थाने तदेव गद्यमित्यादयो भवन्ति नैके विकाराः शक्यदर्शनाः । तथाहि भरतवाक्ये —

१. "पूर्वं तावद् विवेकप्रमुखमिभबलैर्निर्जिते साम्बुकम्पे
मोहेऽस्माकं कुलारौ तदनु समुदिते हन्त वैराग्ययोगे।
शान्तिश्रद्धादियत्नात् पुनरुपनिषदा साधितात् सम्प्रयोगा-
दस्माभिस्त्वत्प्रसादाद् ध्रुवमयमधुना लब्ध एव प्रबोधः॥"

२. "संसारापारसिन्धुप्लवकुशलमहाकर्णधारे मुरारौ
भक्तिर्मुक्तेः परा सा प्रसरतु जननी सार्वकालं जनस्य।
किञ्चाप्यतत् स्वप्रकाशं परतरममलज्योतिरानन्दसान्द्रं
शान्तात्मानो मुनीन्द्राः प्रमुदितमनसः सन्ततं भावयन्तु॥"

(अङ्कः ६. श्लो० ३२, ३३.)

इति द्वे पद्ये नाटकाभरणकारसम्मते अन्यत्र न दृष्टे।

३. "निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते।
स्वपिता यजमानेन किन्नु कस्मान्न हन्यते॥"

(अङ्कः २. श्लो० २०.)

इदमेकं तु पद्यमधिकं निर्णयसागरीये। तद् रिक्तमिह प्रस्तुतसङ्गत्य-भावात्। तद्व्याख्यातृभिरव्याख्यानं चास्य खिलपातं सूचयति।

४. "विसयाणन्दविमुक्के मोक्खे दोसाण दंसअन्तीए।
उवणिसआ हि विरत्ता झत्ति करिज्जइ मए सद्धा॥"

(अङ्कः २. श्लो० ३८.)

इत्येतत्तु पद्यं पद्यगन्धमनाजिघ्रद्भिः कामचारं गद्यपद्यया सञ्चारितं निर्णयसागरीये-द्वितीयाङ्कावसितौ।

प्रस्तुतनाटकाभरणव्याख्याकर्तुरभिधानदेशजीवितसमयादिनिर्धारणं प्रति न किञ्चिदव्यभिचरितं प्रमाणमुपलभ्यते। प्रत्यङ्कपरिसमाप्तिघटितेन — "इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृतभगवता कृते नाटका-भरणे" इति वाक्येनाभिधानं श्रीगोविन्दामृतभगवानिति, गुरुचरणाश्चास्य प्रका-शतीर्थभगवन्त इति च परं ज्ञायते।

श्रीगोविन्दामृतभगवत्पादा एते व्याख्यातारः स्वव्याख्योपक्रमे दृश्य-मानेन,

"स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥"

इति परम्पराप्राप्तदेशीयाचारगतिमनुरुन्धता श्लोकेन बाढं द्रमिडदेशीयाः केऽप्यर्वाञ्चो भवेयुरित्यास्ति प्रतिपत्तव्यम् । तत्तत्सूत्रीयकालमतिक्रम्य स्मार्तविधानपरिकल्पनार्थं तत्तैः परिगुम्भितां सरणिमजहतः, वेदान्तपरिभाषाव्याख्यादिदृष्टतर्कजटिलवाक्यान्यनारचयन्तो मृदुपदगुम्भितां पद्धतिमाश्रयन्तश्च मन्ये नात्यर्वाचीना एते । प्रतिपाद्यबहुमानादपूर्वप्रस्थानपरिकल्पितनाटकगौरवाच्च न केवलमेते प्रबोधचन्द्रोदयं विवरीतुमुद्यताः स्युः, किन्तु बौद्धादिविविधदुष्टमतान्तरप्रवेशस्य स्वजीवितवेलायामपि मनागिवावशिष्टस्य प्रतिरोधापदेशेनापि व्याख्यानमिदं तेषां कर्तव्यकोटिं स्यात् सम्भवेत् प्राप्तम् । आभिरनेकाभिः परिचिन्तनामात्रावलम्बाभिरुपपत्तिभिर्यावत् प्रतिपक्षोपष्टम्भकप्रमाणान्तरानुपलम्भं भवेयुरेते क्रिस्त्वब्दीयषोडशशताब्द्या अनर्वाचीनाः ।

एतत्प्रकाशनावलम्बभूताश्च मातृकाः क-ख-ग-घ-ङ-संज्ञिताः पञ्च । ताश्च यथाक्रमं—

१. वञ्चिराज्यान्तर्गतमणलिक्करमठीयग्रन्थशालीया,

२. स्यानन्दूरपुरस्थचित्रकलानिपुणश्रीमत्पद्मनाभन्तम्पिस्वामिका,

३. अघोरमनक्कल् अधिपतिब्रह्मश्री वासुदेवनम्पूरिप्पाड्ग्रन्थशालान्तर्गता,

४. अम्बरनदीनिवासिवेम्बनाट्टिल्लं नारायणन् नारायणन् इलयतुसम्बन्धिनी,

५. आलुवा चित्तूर्मनक्कल् कुञ्जन्नम्पूरिप्पाड्स्वामिका च । सर्वाः सोपयोगाः कृतज्ञतानुसरणेन तत्तत्स्वामिषु धन्यवादसमुचिताः । आभिः सम्पूर्णं साहायकमाचरन्तीभिर्मातृकाभिः कृतावलम्बस्तेनानेन नाटकाभरणेन प्रबोधचन्द्रोदयस्य प्रतिनवं कमपि प्रकाशमवतारयन्नस्मि धन्यः ॥

अनन्तशयनम्,
१०-३-११२.

के. साम्बशिवशास्त्री.

---

॥ श्रीः ॥

श्रीकृष्णमिश्राचार्यप्रणीतं

# प्रबोधचन्द्रोदयं

## नाटकाभरणाख्यव्याख्योपेतम् ।

---

### प्रथमोऽङ्कः ।

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥ १ ॥

---

यदज्ञानाद् विश्वं भवति फणिवद् रज्जुशकले
निलीनं यज्ज्ञानाद् झटिति सनिदानं त्रिभुवनम् ।
यदुच्चैराम्नायैर्विशदमवगम्यं मुनिजनै-
स्तदेतद् ब्रह्माहं सहजपरमानन्दमधुरम् ॥

नत्वा गौरीगुरुं गौरीं माधवं मां गुरुं तथा ।
नाटकाभरणं नाम टिप्पणं क्रियते मया ॥

इह खलु निखिलमलनिचयनिकेतनविपुलपूतिकुलायदुःसहगर्भभूमिपरिभ्रमणपरिदूयमानदेहानां परुषतरक्रकचनिष्ठुरमातृपार्श्वास्थिपरिपीडितानाम् अत्यन्तसङ्कटतरस्थपुटयोनिद्वारनिःसरणप्रमुष्टपूर्वस्मृतीनां जन्मजरामरणकुम्भीपाकादिदुःखव्रातेष्वनादिषु गङ्गाप्रवाहवदनवसानमनवरतपरिभ्रमितानां चक्रवदनिशं बम्भ्रम्यमाणानां चतुर्मुखमुखैरप्यशक्यग(ण्य ? णन)दुःखव्रातदुःखितानां संसारिणामेवंविधदुःखव्रातमयात् संसारसागरात् कथंनु नाम दुस्तरान्निस्तरः स्यादिति परमकृपाविधेयहृदयैस्तत्रभवद्भिः श्रीकृष्णमिश्राचार्यै-

---

१. 'र्लनि', २. 'मृ' ख. पाठः. ३. 'ताच्छिद्रच' क. ग. पाठः. ४. 'रः' ख. पाठः.

G. P. T. 1842. 500. 31-2-1107. B

स्तत्साधनसम्यग्ज्ञानप्रकाशनायापरोक्षीकृताखिलागमार्थैर्निखिलनिगमावसानसारसङ्ग्रहरूपं प्रबोधचन्द्रोदयं नाम नाटकं निरमायि ।

अतिललितपदकदम्बकमतिगम्भीरार्थमखिलरसपुष्टम् ।
आख्यानमेतदतुलं व्याख्यातुं ग्रन्थकोटयो नालम् ॥
रसैर्भावैरलङ्कारैः समासैश्च पदैरपि ।
प्रसङ्गानुप्रसङ्गैश्च शास्त्रान्तरनिरूपणे ॥
कालक्षेपो महानासीद् ग्रन्थानामपि गौरवम् ।
श्रोतुश्च तन्द्री महती तस्मान्नातिप्रपञ्च्यते ॥

तदिदं यथाशक्ति श्रद्धादिप्रेरितेन मया यथाश्रवणं संक्षेपतो व्याख्यायते । तत्रादौ तावद् भरतादिनाट्यशास्त्रानुसारेण नाटकारम्भापेक्षितनान्दीसपर्यां सम्पादयन् नाटकव्याजेन प्रतिपाद्याखण्डैकरसानन्दब्रह्मात्मैकत्वं च संक्षेपतः प्रदर्शयन्

"स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥"

इत्यादिवचनानुसारेण स्वरूपतटस्थलक्षणोक्तिद्वारा तत्त्वानुस्मरणलक्षणं मङ्गलं सम्पादयति — **मध्याह्नेति** । ननु किमिति नाटकव्याजेन वेदान्तार्थः प्रदर्श्यते । सन्ति खलु बहूनि शास्त्राणि निःश्रेयसप्रतिपादकानि । किञ्च, नाटकस्य शृङ्गारादिरसप्रधानत्वात् तद्विरक्तस्य च निःश्रेयसाधिकाराद् 'वान्तोऽसौ ब्रह्मणे'त्यादिना च शास्त्रेण बहिर्मुखानामत्राधिकारित्वप्रतिषेधाच्च निरतिशयपुरुषार्थशेषतया न नाटकारम्भः सङ्घटीति । किञ्च, धर्मशास्त्रेषु निवृत्तसङ्गानां मुमुक्षूणां विशेषेण सङ्गीतकादिप्रतिषेधादनुपपन्न एवायमारम्भ इति चेद्, नायं दोषः । अधिकारिभेदादस्यार्थस्योपपत्तेः । तथाहि — अनन्तेषु हि प्राणिषु केषाञ्चिदनेकजन्मस्वीश्वरार्पणबुद्ध्यानुष्ठितपुण्यनिवहैरवदातान्तःकरणानामीश्वरप्रसादाच्छर्दितान्न इवास्मिन् संसारे वैतृष्ण्यादिपूर्वकविविदिषाशिरस्कं मुमुक्षोपजायते । तेषां च मुमुक्षूणां केषाञ्चिद् वैदिकानधिकारान्निःश्रेयसरागपरवशतया च कातराणामुपायपरिज्ञानरहितानाम्

"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।"

इत्यादिशास्त्रानुसारेण गुरुपादं चोपसृतानां मोक्षसाधनसम्यग्ज्ञानस्यावश्य-

प्रदर्शनीयत्वात्[1] । विचित्रप्रज्ञत्वाच्च प्राणिनां केषाञ्चिदाकारैर्ज्ञानं जन्यते, केषाञ्चिदिङ्गितैः, केषाञ्चिदभिनयैरपि ज्ञानं जायमानं परिदरीदृश्यते, रोमाञ्चितत्वहर्षाश्रुपातमुखविकासादिलिङ्गदर्शनात् ।

"प्रयोजनेषु ये सक्ता न विशेषेषु भारत ! ।
तानहं पण्डितान् मन्ये विशेषा विघ्नकारकाः ॥"

इत्याद्यनुसारेण च येनकेनापि प्रकारेण पुरुषार्थो भूयादिति परमकारुणिकानां प्रवृत्तिरित्ययमारम्भः सम्बोभवीति । धर्मशास्त्रनिषेधस्तु केवलपरिव्राजकविषय इति सकलमनाकुलम्[2] ।

वेदाधिकारविधुरान् विदुषो विलोक्य
व्रात्यादिकान् विदितनाटककाव्यसारान् ।
तद्बुद्धिवृत्त्यनुगुणं कृपया करोति
ब्रह्मोपदेशमपि नाटकरूपमेव ॥

तत्र तावदाद्यश्लोकगततन्महः इत्यस्य[3] व्यवहितेनोपास्महे इत्यनेन सम्बन्धः । उपास्महे इत्यस्यायमर्थः

"उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते ।"

इति न्यायात् सर्वतः प्रद्योतमानमद्वयं परिपूर्णं सत्यज्ञानानन्तानन्दलक्षणं ब्रह्मशब्दाभिधेयं प्रसिद्धतमं वस्तु प्रत्यक्त्वेन जानीम इति । पूर्वार्धेन तु श्लोकस्य तदमलमित्यत्र तच्छब्दापेक्षितं पूरयन्नस्य तत्त्वस्य सोपाधिकं रूपमाह—यदज्ञानत इत्यादिना । यस्याज्ञानं यदज्ञानम् । पञ्चम्यास्तु निमित्तोपादानयोः साधारण्यात् यस्माच्चैतन्यसंवलितात् कारणादित्यर्थः । तत्र प्रपञ्चैकदेशस्याकाशपरमाण्वादिलक्षणस्याजन्यत्वं वैशेषिकादयः संगिरन्ते । तान् प्रत्याह—खमित्यादिना । एवं तर्हि भूतपञ्चकोपादानाद् भौतिकस्याज्ञानकार्यत्वं न सेत्स्यतीत्याशङ्क्याह— त्रैलोक्यमिति । त्रयाणां लोकानां समाहारस्त्रैलोक्यम् । सुरनरसूकरादिभेदभिन्नभूधरसरित्सागरादिलक्षणभूतभौतिकप्रपञ्चस्य निरूप्यमाणे सत्यविद्यात्मकभूतपञ्चकव्यतिरेकेण तात्त्विकरूपं न विद्यत इति कृत्वा इति त्रैलोक्यमित्युक्तम् । अतोऽविद्यात्मकत्वं भौतिकस्य स्यादिति भावः । तत्रोत्पत्तेः प्रागत्यन्तासदेव

१. 'प्रतिपादकत्वात्' क., 'प्रदर्शितत्वात्' ग. पाठः. २. 'म् । तत्र' ख. ग. पाठः. ३. 'स्य पदस्य व्य' ख. पाठः.

कार्यं जायत इत्यसत्कार्यवादिनां गलगर्जनम् । तन्निराकरोति — उन्मीलतीति । नीरूपस्यासतः सामग्रीसम्बन्धाद्यनुपपत्तेः कारणात्मना विद्यमानमेव कार्यं द्रष्ट्रादिसहकृतसामग्रीसम्बन्धादभिव्यज्यत इत्यर्थः । स्वरूपादप्रच्युतस्यैव कारणस्यासत्यनानाकारावभासो हि विवर्त इत्येवंविधविवर्तवादावलम्बनेनोदाहरणमुदाहरति — मध्याह्नार्केति । यथा खलु लोके कस्यचित् पान्थस्य भागीरथीं गन्तुं प्रस्थितस्य निदाघकालतिग्मद्युतिदीधितिदीप्तस्यातिपिपासापरिम्लानमनसो द्युमणिकिरणकिरणितामिरिणतरमसृणधरणिमण्डलमालक्ष्योद्यद्बलवदनिलौघनुद्यमानसलिलसन्दोहसम्भ्रान्तिः संजायते, एवमेवास्य प्रपञ्चस्य दृष्टादृष्टनष्टस्वभावस्य भावाभिमानपरिभ्रान्तिरपीति भावः । एवं तावत् तटस्थलक्षणमभिधाय विषयादिकं सम्भावयन्नस्य निरुपाधिकं स्वरूपं दर्शयितुमाह — यत्तत्त्वमित्यादिना । यस्य तत्त्वं पारमार्थिकं रूपमिति यावत् । तदेव ज्ञातं सदनन्यसाधारणतया विषयो भवतीति भावः । विदन्तीति विद्वांसः तेषामपरोक्षीकृततत्त्वानामित्यर्थः । ननु चेतनान्तरस्याप्रत्यक्षत्वादपरोक्षीकृतोऽनुपपन्न इति चेद्, नायं दोषः । तद्भेदे प्रमाणाभावाद्, अनङ्गीकाराच्चेति । ननु तेषां किं भवतीत्याकाङ्क्षायामाह —निमीलतीति । अस्य संसारस्य सता सहान्वयेन व्यतिरेकेण शून्यतया वा निरूपणयोग्यं रूपं न लभ्यत इत्येवमन्वयव्यतिरेकाभावपरिहारात् सकलसंसारानर्थनिवृत्तिः प्रयोजनं भवतीत्यर्थः । पुनःशब्दोऽत्र निःश्रेयसयोग्याधिकारसामग्रीसम्पत्त्यानन्तर्यप्रदर्शनार्थः । सकलभ्रमाधिष्ठानभूतात्मतत्त्वयाथात्म्यज्ञानादारोपितद्वैतभ्रमनिवृत्तिरित्यत्र सम्प्रतिपन्नं दृष्टान्तमाह — स्रग्भोगीति । स्रजि भोगी स्रग्भोगी । स्रङ्माला । भोगी भुजङ्गः । तस्य भोगः शरीरम् । तेनोपमीयत इति स्रग्भोगिभोगोपमम् । यथा खलु स्रगापरोक्ष्येणारोपितभोगिभ्रमनिवृत्तिः, तथैव तत्त्वज्ञानाद् द्वैतप्रपञ्चोऽपि निमीलति । बाध्यत इत्यर्थः । एवं तावदनर्थनिवृत्तिरूपपुरुषार्थताभिहिता । इदानीमानन्दाविर्भावरूपपुरुषार्थतामाह --- सान्द्रेति । सान्द्रं बहुलम् । अनवच्छिन्नानन्दस्वरूपामित्यर्थः । तदेव ज्ञाततया पुरुषार्थो भवतीति भावः । तदेव विशिनष्टि --- अमलमिति । अविद्यादिमलरहितमित्यर्थः । चिद्रूपं-

१. 'नं निरा' ख. पाठः, २. 'णं विदन्तीति' क. पाठः. ३. 'तसत', ४. 'न्वयव्य' ग. पाठः. ५. 'तामभिधायेदानीं', ६. 'पत्वमङ्गी' ख. पाठः,

अपिच

अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं
स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् ।

---

मित्यङ्गीकृत्यापि पुरुषस्य वेद्यतामाहुः सांख्याः । तान्निराचष्टे— स्वात्मावबोधमिति । स्वयम्प्रकाशसंविद्रूपमित्यर्थः । प्राभाकरास्त्वप्रसन्नाशयत्वाज्जड एवात्मेति प्रतिपन्नाः, तदपाकरोति — मह इति ।

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः"

इति न्यायात् स्वयम्प्रकाशचिद्घनमित्यर्थः ॥ १ ॥

एवं तावत् तत्पदार्थप्राधान्येन तत्त्वमनुसन्धाय इदानीं त्वम्पदार्थप्राधान्येन तदेवानुसन्दधान आह — अपिचेति । तत्राप्यन्तरङ्गसाधनत्वं योगाभ्यासस्य दर्शयन् तत्फलरूपतया प्रतीचः सर्वोत्कर्षतामाह— **अन्तर्नाडी**त्यादिना । चन्द्रार्धमौलेः मृडानीपतेः प्रत्यग्ज्योतिः अन्तर्यामिस्वरूपं जयति सर्वोत्कर्षेण वर्तत इत्यर्थः । यमिन इति तस्य विशेषणम् । यमिनो योगमनुतिष्ठतः । मूलाधारमारभ्याद्वादशान्तमत्यन्तसूक्ष्मतरप्रत्यग्वस्त्वनुसन्धानरूपयोगाभ्यासं कुर्वत इत्यर्थः । कथम्भूतं ज्योतिरित्याकाङ्क्षायां कविभिरेवमुत्प्रेक्षितमित्याह — स्पष्टेत्यादिना । स्पष्टं च तल्ललाटे भवं चेति विग्रहः । स्पष्टत्वं नाम सर्वानुग्राहकतया सन्ततप्रद्योतमानत्वम् । नेत्रमिति व्याजो नेत्रव्याजः । तेन व्याजेन निभेन व्यक्तीकृतमभिव्यक्तमिवेत्युत्प्रेक्षार्थः । एतदुक्तं भवति—निसर्गनित्योपरतस्य सन्ततयुक्तात्मनः परमेश्वरस्य प्राण्यनुग्रहाय योगमाहात्म्यं प्रदर्शयितुं लोकप्रत्ययार्थं भ्रूमध्यगतद्विदलपद्ममध्यारूढं तदेव प्रत्यग्वस्तु व्यक्तीकृतमिवेति सम्भाव्यते तच्चैवमुत्प्रेक्ष्येति । अथवा इवकारस्त्वेवकारार्थः । उक्तप्रकारेण व्यक्तीकृतमेवेत्यर्थः । तस्य निरुपाधिकं रूपमाह — जगद्व्यापीति । सर्वस्य सत्तास्फूर्तिप्रापकं सत् साक्षित्वेन वर्तत इत्यर्थः । तदेव युक्तावस्थाविशिष्टं वस्तु विशिनष्टि— अन्तर्नाडीत्यादिना । देहस्यान्तर्विद्यमाना प्रधाना नाड्यन्तर्नाडीत्युच्यते । अथवा 'अव्ययं विभक्ती'त्यादिपाणिनिसूत्रानुसारेण नाड्या अन्तरिति समा-

---

१. 'त्यन्वयः।' ख. पाठः. २. 'क्षे' क. पाठः. ३. 'स्थायुक्तं व', ४. 'ति वार्थः' ख. पाठः.

प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र-
व्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ २ ॥

सार्थः । अथवा 'राजदन्तादिषु परमि'ति वा । अन्तर्नाडीनियमनं नाम योगशास्त्रानुसारेणेन्द्रियवृत्तिभिः सह प्राणस्य स्वरससञ्चारनिरोधेन सुषुम्नामार्ग एव नितरां यमनं प्रत्यापादनम् । तेन नियमितेन मरुता लङ्घितमतिक्रान्तं ब्रह्मरन्ध्रं सौषुम्नमार्गं येन तत् तथोक्तम् । ब्रह्मप्राप्तिहेतुभूतब्रह्मनाडीद्वारेण मरुता सह कारणावध्यनुस्मर्यमाणमित्यर्थः । शान्त्यादिसहकृतयोगानुष्ठानफलमाह — स्वान्त इत्यादिना । स्वान्तमन्तःकरणं तस्मिन्नन्तःकरणे बाहिर्मुख्यं विहाय शान्त्यादिपक्षपातेन वर्तमाने सति सम्यगपरोक्षतया उन्मीलद् अभिव्यज्यमानपरमसुखमित्यर्थः । एवं तावत् श्लोकद्वयेन तत्त्वम्पदार्थानुस्मरणप्राधान्येन मङ्गलमकारीत्येकपक्षः । अपरे तु 'युष्मदस्मदि'त्यादिभाष्यपदानुसारेण नाटकारम्भापेक्षितविषयादिप्रसिद्धये द्वैतेन्द्रजालस्याध्यासोपवर्णनं क्रियते प्राधान्येनेति वर्णयाम्बभूवुः । तदपरे न क्षमन्ते । तथाहि—ननु अध्यासो नाम परत्र परावभासलक्षणः । स च शुक्तिरूप्यादौ सादृश्यसम्प्रयोगसंस्कारादिसहित एव दृष्टचरः । तच्च सादृश्यादिकमात्मानात्मनोर्न सम्भवति । अनात्मा तावद् दुःखाद्यात्मकः । आत्मा तद्विलक्षणः सुखाद्यात्मकः । अतस्तयोरध्यासव्यापकसादृश्याद्यभावाद् इतरेतराध्यासो न सम्भवतीति चेद्, नायं दोषः । पूर्वज्ञानसंस्कारसध्रीचिनस्याज्ञानमात्रस्यैवाध्यासव्यापकत्वात् तस्य चात्मादावपि सुलभत्वात् । यद्यपि रजताद्यध्यासे सादृश्यादि बहु विद्यते, तथापि न त(त्पैलत्वादिव ?)दध्यासप्रयोजकं भवति । खं कृष्णं, तलं मलिनं, पीतः शङ्खः, तिक्तो गुडः इत्यादिषु सादृश्यादिभिर्विनैवाध्यासदर्शनात् । अज्ञानेन विना कार्यादर्शनात् । अतोऽविद्यानिमित्तः परस्पराध्यासः सम्भवत्येवेति । इममर्थमाह — मध्याह्नेत्यादिना । तत्र मरीचिकास्विवेति दृष्टान्तेन तिग्मद्युतिदीधितिनिवहे दुःखरूपे सुखशीतलसलिलसमारोपो यथा, तद्वदनात्मनि दुःखाद्यात्मके परमानन्दाध्यासोऽपीति विवक्षितः । स्रजि च सुखात्मके दुःखरूपोरगारोप-

१. 'ह अनुकारिणा बुद्ध्यानु', २. 'वानुभवसध्री' ख. पाठः. ३. 'त्पञ्चपल' क. ख. पाठः.

(नान्द्यन्ते ततः प्रविशति सूत्रधारः ।)

**सूत्रधारः**—अलमतिविस्तरेण । आदिष्टोऽस्मि सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलेन

---

दर्शनात् सान्द्रानन्देऽपि तद्वदेव निखिलदुःखारोप इति । नन्वेवं परस्पराध्यासे द्वयोरपि बाध्यत्वात् सर्वशून्यताप्रसङ्ग इत्याशङ्क्याह—सान्द्रेति । सकलभ्रमाधिष्ठानभूतपरमानन्दचिद्घनं वस्तु परिशिष्टं विद्यत इत्यर्थः । तत्र प्रमाणमाह—स्वात्मेति । तत्रैव मानान्तरसद्भावमाह—अपिचेति ।

"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।"

इति न्यायात् सर्वप्रमाणानि चात्र मानमिति भावः । अन्तरङ्गसाधनानुष्ठानप्रचयात् करतलन्यस्तकुवलयदलवदपरोक्षीकर्तुं च शक्यत इत्याह—अन्तर्नाडीत्यादिना । एवमध्याससमर्थनमाद्येन श्लोकेन द्वितीयेन तु साधनप्रदर्शनं क्रियत इत्येके प्रतिपन्ना इत्यर्थः । सगुणनिर्गुणप्राधान्येन तत्त्वानुस्मरणं क्रियत इति पक्षान्तरम् । तथाहि—नाटके तावदधिकारिभेदापेक्षया सगुणनिर्गुणरूपेण वस्तु प्रतिपाद्यते । तत्र निर्गुणानुगुण्येन निर्गुणं वस्त्वनुसन्दधात्याद्येन श्लोकेन । द्वितीयेन तु सगुणम् । अस्मिंस्तु पक्षे जगज्जन्माद्युपलक्षितं विदुषां स्वानुभवगम्यमशेषानर्थरहितमनवच्छिन्नानन्दचिद्घनं वस्त्वित्याद्यश्लोकार्थः । द्वितीये स्पष्टमेव चन्द्रशेखरस्योमावल्लभस्य सगुणब्रह्मरूपत्वं, षष्ठ्या त्वौपचारिकार्थत्वमिति विशेषः । अथवा, वेदान्तानां प्रतिपादनप्रक्रियाभेदप्रदर्शनं क्रियते प्राधान्येनार्थैकवद्द्वाभ्यामिति मतम् । अथवा, पूर्वेण देवतानमस्कारः क्रियते । उत्तरेण गुरुनमस्कार इति मतम् । सर्वेष्वेषु पक्षेष्वक्षराणि यथासम्भवं योज्यानि । अन्ये तु गुरोर्नाम चन्द्रार्धमौलिरिति । देवताभक्तिवद् गुरुभक्तेरपि ज्ञानप्राप्तावन्तरङ्गसाधनत्वाद् गुरुचरणसरोजप्रणतिरवश्यकरणीयेति भावः ॥ २ ॥

एवं तावदशेषनाट्यानामाद्याचार्यस्य नृत्तस्वामिनः परमगुरोः परमेश्वरस्यानुस्मरणात् परिहृताशेषान्तरायः तत्रभवान् नाटकारम्भं प्रतिजानीते—नान्द्यन्त इति । तत्र नान्दी नाम—

---

१. 'णप्र' ग. पाठः.

"नन्दी वृषो वृषाङ्कस्य रङ्गोऽभून्नृत्यतः पुरा ।
अतस्तदाख्यया नान्दी रङ्गपूजा प्रकीर्तिता ।।"

इति वचनाल्लाजाञ्जलिप्रकिरणादिना क्रियमाणा सपर्येति । अथवा, सकललोकसन्तोषकरनृत्तदिदृक्षवः सुरनरकिन्नरगन्धर्वादयः सर्वतोदिशं गताः सम्भूय समायान्त्वित्यभिसन्धाय क्रियमाणा मुरजमृदङ्गतालादिसामग्रीसहिता सपर्या पूर्वरूपत्वान्नान्दीति निगद्यते । अथवा,

"सभ्यान् नन्दयतीत्युच्चैः सा नान्दीति निगद्यते ।।"

इति वचनात् सभ्यावर्जनरूपा सपर्येत्येवंविधा नान्दी । पूजावसान इत्यर्थः । ततः किमिति तदाह — सूत्रधार इति । वर्तिष्यमाणकथासूचकत्वात् सूत्रं तदर्थाभिव्याञ्जिकां[2] मञ्जुवाचं धत्त इति धारः । नाट्यशास्त्रोक्तप्रकारेणाभ्युक्षितरङ्गमधिरुह्य सपर्यासमुल्लासिताशयं सज्जनसमाजं सभाजयन् रङ्गाचार्यो नाट्यार्थशेषतया प्रवर्तत इति शेषः । अथवा नन्दी वृषः । वृषशब्दस्तु धर्मवचनः । तस्यान्तेऽवसाने । एतदुक्तं भवति — ईश्वरार्पणबुद्ध्यानुष्ठितविहितकर्मणामवसानं प्रत्यक्प्रावण्यं तस्मिन् सतीति । ततः किमिति चेत् तदाह — ततः प्रविशतीत्यादिना । ततो मायायवनिकातः तां विधून्वन्नीश्वरानुग्रहात् विवेकादिसम्पन्नः शमादिशाली श्रद्धावान् 'अथातो ब्रह्मजिज्ञासा' (ब्र० सू० १-१-१) इत्यादिसूत्राणां धारणात् सूत्रधारोऽधिकारी वस्तुस्वरूपसमन्वयाविरोधसाधनफललक्ष(णफलपञ्चात्मक ? णात्मकशास्त्र)विचारनिर्वर्तनाय प्रक्रमत इत्यर्थः । रङ्गाचार्यप्रवृत्तिमेव दर्शयति — **आदिष्टोऽस्मी**त्यादिना । गोपालेनाहमादिष्टोऽस्मीति सम्बन्धः । चिरव्यवहितमिवादेशार्थमात्मगतमेव साटोपमनुसन्धत्त इत्यर्थः । आदेशार्थगौरवप्रदर्शनाय बहुभिर्विशेषणैर्गोपालं महीकरोति — सकलसामन्तेत्यादिना । तत्र तावत् प्राथमिकेन विशेषणेनैश्वर्यातिशयप्रदर्शनं क्रियते । सकलाश्च ते सामन्ताश्च तेषां चक्रं समूहः । तस्य चूडा मकुटम् । तत्रोप्तानां मणीनां रश्मयो मरीचयः त एव मञ्जरीवन्मञ्जरी स्तबकः तेन नीराजितमभिद्योतितं चरणकमलं यस्य स तथोक्तः । तेन राजप्रकृतिवन्द्येनेत्यर्थः । द्वितीयेन विशेषणेन श्रीमन्नरहरिसाम्यसम्पादनेन भुवनकण्टकोद्धरणसमर्थपराक्रम-

१. 'ङ्गो भूतः पुरा किल ।' ख. ग. पाठः. २. 'दिकां मञ्जुलां वा' ख. पाठः.
३ 'र्यो रङ्गार्थ' ग. पाठः.

बलवदरिनिवहवक्षःस्थलकवाटपाटनप्रकटितनरसिंहरूपेण प्रबलतरनरपतिकुलप्रलयमहार्णवनिमग्नमेदिनीसमुद्धरणोपनीतमहावराहरूपेण सकलदिग्विलासिनीकर्णपूरीकृतकीर्तिलतापल्लवेन समस्ताशास्तम्बेरमकर्णतालास्फालनबहलपवनसम्पातप्रवर्धितप्रतापानलेन श्रीमता गोपालेन। यथा खल्वस्य सह-

---

प्राबल्यं दर्शयति — बलवदित्यादिना। बलवन्तश्चारयः शत्रवस्तेषां निवहः समूहस्तस्य वक्षःस्थलमुरःस्थलं तदेव कवाटं तस्य पाटनेन विदारणेन प्रकटितं नरसिंहस्य रूपमिव रूपं येन स तथोक्तः। तेनातितेजस्विनादिष्टार्थाकरणे महाननर्थो भवतीति भावः। तार्तीयेन विशेषणेनातिरमणीयादिकोलतुलितसामर्थ्यप्रदर्शनेन परोपकारशीलता प्रागबलस्येति दर्शयति — प्रबलेत्यादिना। प्रकर्षेण बलिष्ठानां नरपतीनां कुलं समाजः। स एवाल्पसत्त्वैर्मनसाप्यवगाहितुमशक्य इति प्रलयमहार्णववदर्णवः तत्र निमग्नत्वं नाम तैराक्रान्तत्वं, तन्निरसनेन मेदिन्याः सम्यगुद्धरणमात्मसात्सम्पादनं, तेनोपनीतमहावराहरूपेण[1]। आत्मादेशानुवर्तिनामनुकूलानुभावेनेत्यर्थः। चतुर्थेन विशेषणेन पुण्यवत्प्राथमिकतां दर्शयति — सकलेत्यादिना। सकलदिग्विलासिनीनामखिलाशाङ्गनानां लीलाकुवलयादिकं कर्णालङ्कारभूतं कर्णपूरमित्युच्यते। तद्वदखिलाह्लादकरी कीर्तिरस्येति। पञ्चमेकेन च व्यावर्तकेन निरङ्कुशाज्ञाग्रहगृहीतासज्जनाशयसन्तापकद्युतिसन्दोहैः सर्वतो देदीप्यमानतां दर्शयति — समस्ताशेत्यादिना। समस्ताश्च ता आशाः ककुभः तासु स्तम्बेरमा मातङ्गाः तेषां कर्णा एव तालाः, तेषामास्फालनेन सञ्चालनेन बहलः सान्द्रः पवनो वायुः तस्य सम्पातेन प्रवर्धितः प्रतापो दूरादेवारीणां भयजनकत्वलक्षण एवानलो यस्य, स तथोक्तः। तेनाप्रधृष्यनिजतेजसेत्यर्थः। षष्ठेन च व्यवच्छेदकेनानुक्तैरगणितगुणगणमणिश्रेणिभूषणैरलं जाज्वल्यमानतां दर्शयति — श्रीमतेति। गां भुवं पालयतीति गोपालः। एवंविधेनाज्ञापितत्वादवश्यानुष्ठेय एवायमर्थ इति भावः। ननु कथमयं ब्राह्मणो विशेषविज्ञानी च सन् भूपालः स्यादिति चेद्, नायं दोषः। "दौर्मन्त्र्या

---

१. 'मि' ख. पाठः.

जसुहृदो राज्ञः कीर्तिवर्मदेवस्य दिग्विजयव्यापारान्तरित-परब्रह्मानन्दैरस्माभिः समुन्मीलितविविधविषमविषयरसास्वा-

---

न्नृपतिर्विनश्यती''त्यादिवचनात् मन्त्रिनयानिबन्धनैव राज्यरक्षा बाहुल्येन प्रतीयते। अतोऽयमुपचारादुक्तविशेषणो भवत्येव भूपाल इति।

अधिकारिपक्षे योजना कथमिति चेत् तदाह— आदिष्ट इत्यादिना। तत्रादेशो नाम सम्प्राते हि मया श्रोतव्यविध्यर्थः सम्पादनीयः इत्येवंविधप्रत्ययित्वं, तद्वानहमस्मीत्यर्थः। गां श्रुतिलक्षणामर्थानुष्ठानादिना पालयतीति गोपालः।

''यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।''

इति वचनात्। श्रुत्यनुग्राहकेण तेन श्रवणाधिकारिता विज्ञापितेत्यर्थः। तं विशिनष्टि— सकलेत्यादिना। सकलाश्च ते वैशेषिकादयः सामन्ताश्चातिनिशिततर्कशरशतैर्बौद्धादिपरिपन्थिनिरासहेतुत्वात् तेषाम्। एतदुक्तं भवति— अनुग्राह(क)मानसद्भावाद् वैदिकसत्तर्कस्यातः प्रबलत्वात् तमेवेतरे तात्पर्यवृत्त्या प्रतिपद्यन्त इति। बलवदरीणामहङ्कारादीनाम्। पुनरपि विशेषणं प्रबलतरचार्वाकादिरेव नरपतिसमूहस्तस्मिन् महार्णवे नितरां मग्नत्वं नामाशास्त्रीय एव पुरुषार्थताबुद्धिः। तस्मादर्णवात् मेदिन्याः पुरुषार्थतायाः सम्यगुद्धरणं सन्मार्गस्थापनम्। तेन तथेत्यर्थः। सकला दिशः शास्त्रप्रभेदाः, ता एव विलासिन्यस्तासां कर्णपूरीकृतः श्राव्यान्तरपरिहारेण स्वयं श्रोतव्यत्वेन व्यवस्थितः कीर्तिपल्लवो यस्य तेनेत्यर्थः। समस्ताश्च ता आशाश्च फलस्पृहाः। तत्तत्फलसाधनत्वेन स्तम्बेषु दर्भमुष्टिषु रमन्त इति स्तम्बेरमाः क्रतुविशेषाः तेषामाकर्णनानुष्ठानादिभिः सम्यगुत्तेजितनिजरूपोऽयमित्यर्थः। श्रीमता सर्वसम्भावनीयेनेति। गोपालेनाहमादिष्टोऽस्मीत्युक्तः। येन प्रकारेणादेशः कृतः तथाप्रकारः प्रदर्श्यते— यथा खल्वित्यादिना। अस्माभिर्दिवसा अतिवाहिता इत्यन्वयः। दिवसान् विशिनष्टि— समुन्मीलितेत्यादिना। दिग्विजयव्यसनवेलायां विविधाः सिन्धुकाश्मीरादिभेदेन, विषमाश्च तत्रत्यपरिपन्थिबाहुल्येन, विषया राष्ट्र-

---

१. 'न्धनने' ख. पाठः. २. 'णोऽपि भ' क. पाठः. ३. 'ह्य' ग. पाठः. ४. 'षु ये र' ख. पाठः. ५. 'न्मिषिते' क. पाठः.

ददूषिता इवातिवाहिता दिवसाः । इदानीं तु कृतकृत्या वयम् ।

यतः

नीताः क्षयं क्षितिभुजो नृपतेर्विपक्षा
रक्षावती क्षितिरभूत् प्रथितैरमात्यैः ।
साम्राज्यमस्य विहितं क्षितिपालमौलि-
मालार्पितं भुवि पयोनिधिमेखलायाम् ॥ ३ ॥

तद् वयं शान्तरसप्रयोगाभिनयेनात्मानं विनोदयितु-मिच्छामः । तद् यत् पूर्वमस्मद्गुरुभिस्तत्रभवद्भिः श्रीकृष्ण-

---

भेदाः, तेषु समुन्मीलितैरभिव्यक्तैः विषयरसैर्दूषिता मोघीकृता इवेत्यात्मनैवान्ववेदीत्यर्थः । ननु किमित्ययमनुशोचितदान्, सर्वैरेव दिवसा अतिवाह्यन्त इति चेत्, सत्यम् । तथापि परिभ्रष्टपरमानन्दत्वात् सम्भवतीत्याह— अन्तरितपरब्रह्मानन्दैरिति । राजकार्यव्यग्रतया बाहिर्मुख्येन विगलितप्रत्यगानन्दैरस्माभिरित्यर्थः । हन्त तर्हि ब्रह्मानन्दरागी चेदविवेकिवद् असिधाराव्रतसमं राजामात्यपदं प्राप्यैवंविधदुर्व्यसनं किमिति चर्करीति, तत्राह— सहजसुहृद इति । अकृत्रिमप्रेमरसस्नपितनिसर्गसान्द्रसौहार्दशालिनः परमसुहृदो वचनस्यानुष्ठेयत्वात् 'परोपकाराय सतां प्रवृत्तिरि'ति वचनाच्चावश्यानुष्ठेय एवायमर्थ इति भावः । ननु

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥"

इति न्यायात् पुनरपि तथैव प्रवर्ततामित्याशङ्क्याह — इदानीन्त्वित्यादिना । सुहृदर्थचिकीर्षया प्रस्तुतस्यार्थस्य च निर्वर्तितत्वाद्, न भूयोऽपि तथा प्रसरिसर्तीति[1] भावः ।

कार्तार्थ्यमेव प्रतिपादयति— **यत इत्यादिना** । सुहृत्कार्यं कार्त्स्न्येन सम्पादितमित्यर्थः ॥ ३ ॥

फलितमाह — **तद्वय**मित्यादिना । "कृतकृत्यस्य कामेऽधिकार" इति वचनाद् विषयापरोक्ष्यवच्छान्तरसस्नपितैरभिनयविशेषैरात्मानन्दास्वाद-

---

१ 'सरतीति' ख पाठः. २. 'सहिन' क. पाठः

**मिश्रैः प्रबोधचन्द्रोदयं नाम नाटकं निर्माय भवतः समर्पितमासीत् तद् अद्य राज्ञः श्रीकीर्तिवर्मणः पुरस्तादभिनेतव्यं भवता। अस्ति चास्य भूपतेः सपरिषदस्तदवलोकने कुतूहलमिति। तद्भवतु। गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत्।**

---

नेन चिरं क्रीडितुमिच्छाम इत्यर्थः। ननु तर्हि गङ्गातीरादिस्थनविशेषसंसेवया समाधिसम्पादनमुचितं, नतु नाट्यरसाग्रह इति चेत्, सत्यं, तथापि नाट्यस्य सकलसाधारण्यात् स्वानुभववदन्येषामप्यनुभवो भूयादित्यभिप्रेतत्वान्न विरोध इति भावः। भवतु तर्हि तथा, कतमो नाटकविशेषस्त्वार्यमिश्रेणाज्ञाप्यत इति चेत् तत्राह— तद् यत् पूर्वमित्यादिना। विचित्रप्रसादत्वाद्। राज्ञामविदितप्रसादेन मया कथं तदभिनेयमिति चेत् तत्राह— अस्ति चेत्यादिना[1]। कुतूहलं नाम तद्दिदृक्षया व्याकुलत्वम्। उक्तञ्च—

"इष्टे वस्तुन्यविज्ञाते स्वरूपेण व्यथावहम्।
तल्लिप्सया पुनः पुंसो व्याकुलत्वं कुतूहलम्॥"

इति। चकाराद् धनादिकमपि लभ्यत इति भावः। सङ्गीतकं नाम[2] कायवाक्चेतसामेकीभावोल्लसल्लयेन सह गीतवादित्रादिसंमिश्रितः प्रयोगः।

सहजसुहृद इत्यादेरपरा योजना। तथाहि— पुण्यापुण्यतत्फलसंस्कारलक्षणा कीर्तिरेव वर्म कवचमुपाधिर्यस्य द्योतनात्मकस्य, सोऽयं श्रीकीर्तिवर्मदेवः क्षेत्रज्ञः। भाविनीं वृत्तिमाश्रित्य परमात्मरूपेण राजतीति राजा। तस्य राज्ञो दिग्विजयव्यापारो नाम— स्वर्गपशुपुत्रकलत्रादिलक्षणफलप्रकाशकशास्त्रभेदा दिक्छब्देनोच्यन्ते, तेषां विजये तत्तत्प्रकाश्यफलसम्पादने व्याप्रियमाणवाणिज्याध्यापनदानयोगादिव्यापाराः। तैरन्तरितः तिरोहितः परब्रह्मानन्दः येषामस्माकं ते वयं तथा। तैरस्माभिः। सम्यागवोन्मिषिता अभिव्यक्ताः चन्दनवनितादिभेदेन विविधाश्च परिपन्थिबाहुल्येनाशक्यसम्पाद्यतया च विषमाः भोग्यत्वेन विषयाश्च, तेषु तेषु विषयेषु

---

१. 'ना। अत्र कु' घ. पाठः. २. 'म गेयवाद्यतालानामे' ख. पाठः.

रसो रागस्तैर्दूषिता मोघीकृता इव । एवमसम्पाद्य कञ्चित् पुरुषार्थं व्यर्थः कालो गत इत्यर्थः । ननु पुनरपि कर्तव्यविशेषमापाद्य तथैव प्रवर्तितामिति चेत्, नेत्याह — इदानीं त्वित्यादिना । तुर्विशेषे । कर्तव्यानुष्ठान-फलं जातमित्यर्थः । तदेव दर्शयति — यत इत्यादिना । क्षयो विनाशः । स्वर्गादिलक्षणं[1] फलं भुनक्तीति क्षितिभुक् । तस्य नृपतेः सञ्जातस्वामिनः । विपक्षाः शत्रवः रागादयः । रक्षावतो क्षेमवतो । क्षितिर्निःश्रेयसभूमिः । प्रथितैः सम्प्रतिपन्नैः अमात्यैः शमदमसन्तोषादिभिः । किञ्च साम्राज्यं सम्रा-ड्भावः । विहितं सम्पादितम् । तदेव विशिनष्टि[2] — क्षितिपालेत्यादिना । क्षितिं पश्वादिलक्षणं क्षणप्रध्वंसिनं[3] पालयन्तीति क्षितिपालाः याज्ञिकाः यायजूकाः । तेषां मौलिः विहितानुष्ठानफलं प्रत्यक्षप्रावण्यलक्षणम् । त-देव मालावदलङ्कारहेतुत्वान्माला । तयार्पितं प्रत्तम् । कुत्रेति, भुवि । 'निः-श्रेयसे वाचः समुद्राः' इति वचनात् पयोनिधिशब्देन वाचोऽभिधीयन्ते । तात्पर्येणाखिलाम्नायवेद्याद्वितीयानन्दपरमपद इत्यर्थः । तत् तस्मात् । वय-मधिकारिणः । शमदमादिरसबहुलस्यास्य रसप्रपादनेनास्मानं प्रत्यञ्चं विनो-दयितुमिच्छामः[4] प्रार्थयामः । नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरा-गशमदमादिसाधनसम्पन्मुमुक्षुत्वलक्षणसाधनचतुष्टयं सम्पन्नमिति भावः । कस्तर्ह्युपाय इत्याकाङ्क्षायामाह — तद्यत् पूर्वमिति । अत्रभवद्भिः पूज्यैः कृष्णमिश्रैः कृष्णद्वैपायनाचार्यैः, प्रबोधचन्द्रस्योत्पत्तिहेतुत्वात् प्रबोधच-न्द्रोदयं नाम शारीरकशास्त्रमभिधीयते । तच्च नाट्यवदपरोक्षभावहेतुत्वात् नाटकं निर्माय वि(रच्य ? रचय्य) भवतः साधनचतुष्टयसम्पन्नस्याधिकारिणः सम्यक्तात्पर्येण तदर्थचिन्तनार्थमर्पितं प्रत्तमित्यर्थः । अद्य इदानीं, विवे-कादिसम्पन्नस्य क्षेत्रज्ञस्य । पुरस्तात् पूर्वमेव बाहि(रत्वा ? मुख्या)दि-प्रसक्तेः तच्छारीरकशास्त्रमभिनेतव्यं विचारणीयमित्यर्थः । भवता अधिकारि-सामग्रीशालिना[5] । अस्य अनादिसंसारदुःखव्रातदुःखितस्य सञ्जातस्वामिनः । सपरिषद इति हेतुगर्भं विशेषणं, शमदमविवेकादिपरिवृतत्वादित्यर्थः । तत् तस्य शारीरकस्यार्थावलोकने आलोचने कुतूहलं विद्यत इत्यर्थः । एवं तावत् ईश्वरार्पणबुद्ध्यानुष्ठितविहितकर्मनिवहेन प्रसन्नाशयः साधनचतुष्टय-

१. 'णं भु', २. 'ष्टि । क्षितिं' ख. पाठः. ३. 'नं फलं पा' ख. पाठः. ४. 'मः नि' क. ख. पाठः. ५. 'रिणा । सा' ख. पाठः.

(प्रविश्य नटी)

**नटी** — (क) एसह्मि। आणवेदु अय्यउत्तो को णिओ-ओ अणुचिट्ठीयदु त्ति।

**सूत्रधारः** — आर्ये! विदितमेव भवत्याः।

अस्ति प्रत्यर्थिपृथ्वीपतिविपुलबलारण्यमूर्च्छत्प्रताप-
ज्योतिर्ज्वालावलीढत्रिभुवनविवरो विश्वविश्रान्तकीर्तिः।
गोपालो भूमिपालान् प्रसभमसिलतामित्रमात्रेण जित्वा
साम्राज्ये कीर्तिवर्मा नरपतितिलको येन भूयोऽभ्यषेचि
[॥ ४ ॥

(क) एषास्मि। आज्ञापयत्वार्यपुत्रः को नियोगोऽनुष्ठीयतामिति।

सम्पन्नो वेदाङ्कुरसंरक्षणरूपनिरूपणेन नियुक्त इवायमधिकारी श्रोतव्यविध्यर्थः सम्पादनीयो मयेत्येवं प्रतिपन्नवान् इत्युक्तम्। अधुना श्रोतव्यविध्यर्थनिर्वर्तनप्रकारमेव दर्शयति — तद्भवत्वित्यादिना। गृहमन्तःकरणगुहाम्। गृहिणीं बुद्धिम् आहूय पराग्विषयात् प्रत्यगाभिमुख्यमापाद्य। इतरगीतानामल्पफलत्वादसम्यक्त्वम्। आत्मविषयं गीतं सङ्गीतकम्। वेदान्तमहावाक्यानां शक्तितात्पर्यपर्यालोचनरूप(प्र)पञ्चात्मकविचारमनुतिष्ठामीति। नेपथ्यं पात्रपरिग्रहस्थानम्। इतरत्तावत् इहागच्छेति यावत्॥

**प्रविश्य नटी**। आहेति शेषः। कथमिति, तदाह—**एषास्मीति**। आज्ञापयत्वार्यपुत्रः को नियोगोऽनुष्ठेय इति।

विदितं खलु भवत्याः। किं तदिति। तदाह — **अस्तीत्यादिना**। प्रत्यर्थिनो विपक्षाः पृथ्वीपतयश्च। तेषां विपुलं प्रचुरं बलं सैन्यम्। तदेवारण्यमटवी, तत्र मूर्च्छत् प्रज्वलत् प्रतापो नाम दूरादेवारीणां भयजनकत्वं[३] तदेव ज्योतिः तस्य ज्वालाः शिखाः ताभिः आसमन्ताद् अवलीढमास्वादितं व्याप्तं त्रयाणां भुवनानां विवरमन्तरालं येन स तथा। पुनरपि विशि-

१. 'णकुहरम्' ख. पाठः. २. 'यां' क. पाठः. ३. 'त्वलक्षणः। स एव' ख. पाठः.

अपिच

अद्याप्युन्मदयातुधानतरुणीचञ्चत्करास्फालन-
व्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः ।
उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिल-
प्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तैः रणक्षोणयः ॥ ५ ॥

तेन च शान्तपथप्रस्थितेनात्मनो विनोदार्थं प्रबोधचन्द्रोदयाभिधानं नाटकमभिनेतुमादिष्टोऽस्मि । तदादिश्यन्तां भरता वर्णिकापरिग्रहाय ।

---

ष्यते । विश्वेति । विश्वस्मिन् जगति विविधप्रकारेण बलवीर्यशौर्यतेजोगभस्तिभिः श्रान्ता व्याप्ता कीर्तिर्यशो यस्य स तथा । पूर्वमप्यभिषिक्त एव सन् अरातिरिक्तराज्यो यद्वीर्यात् नृपतिवदभिषिक्तः सोऽस्तीत्यवगतमेवेत्यर्थः ॥ ४ ॥

इतश्चासौ सुवेद्य इत्याह । अपिचेत्यादिना । यस्य यशांसि वीरचरणसमज्ञा रणक्षोणयः सङ्ग्रामभूमयः विशेषणाभिव्यक्तैर्नादैर्ध्वनिभिरुच्चकैः अद्यापि इदानीमपि गायन्ति सोऽस्तीत्यन्वयः । कथम्भूतैर्नादैरित्याह— प्रचण्डेति । प्रकर्षेण चण्डेन बहुलेन वायुना क्षुभ्यत् कुञ्जराणां मस्तका एव कूटवत् कठिनत्वात् कूटास्तेषां कुहरं छिद्रं तत्र व्यक्तैर्नादैः । कथम्भूता रणक्षोणय इत्याकाङ्क्षायां विशिनष्टि—उन्मदेत्यादिना । उद्धतो मदो यासां यातुधानानां क्रव्यादानां तरुणीनां चञ्चत् स्फुरत् कराणामास्फालनेन व्याक्षेपेण व्यावल्गद् विशेषेणाकुलीभवन् नृणां शिरःकपाला एव तालाः तेषां रणितैः शिञ्जितैः सह नृत्यन्त्यः नर्तनं कुर्वत्यः पिशाचानामङ्गना वनिता यत्र ता रणक्षोणयः तथोक्ताः । तत्प्रभावोऽद्यापि प्रत्यक्षीकर्तुं शक्यत इत्यर्थः ॥५॥

ततः किमिति तदाह— तेनेत्यादिना । शान्तिपथप्रस्थितेन । प्रत्यक्प्रवणेनेत्यर्थः । किं पुनस्तार्हे मया करणीयमिति, तदाह— तदादिश्यन्तामिति । तस्मादाज्ञाप्यन्तां नाट्यशास्त्रविदः । तत्तत्प्रवेशानुकूलकलापालङ्कृतपात्रपरिग्रहायेत्यर्थः ।

---

१. 'ति तदाह' ख, 'त्यत आह' घ. पाठः. २. 'यामाह — उ' घ. पाठः.
३. 'र्थः । अथवा उ' ख. पाठः.

**नटी**— (सविस्मयम्)(क) अच्चरिअं अच्चरिअं । जेण तह णिअभुअबळविक्कमेक्क णिब्भच्छिअसअळराअमण्डळेण

(क) आश्चर्यमाश्चर्यम् । येन तथा निजभुजबलविक्रमैकनिर्भर्त्सितसकलराज-मण्डलेनाकर्णाकृष्टकठिनकोदण्डदण्डबहलघनवर्षसन्ततशरधारानिकरजर्जरत्तुर-

उच्चावचरूपदेहपरिग्रहकारणाखिलकर्मादिसंस्काराश्रयान्तःकरणगुहा नेपथ्यम् । तत्र स्थितामुत्कृष्टपुरुषार्थप्राप्तिहेतुत्वात् आर्यां बुद्धिं संबुद्ध्या प्रार्थयति — आर्ये इति । प्रविश्यानुकूल्येन स्थित्वा । महदादिजगच्चित्रं नाटयतीति नटी बुद्धिः आह । एषास्मीत्यादिना । आत्मानुकूल्यमावेदितमित्यर्थः । प्रत्यर्थिपृथ्वीपति प्रतिविद्धकर्मणां फलपङ्क्तिरभिधीयते । तत्पतयो रागादयः । त एवारण्यवद् व्यामोहहेतुत्वात् अरण्यं, तत्र मूर्च्छत् प्रवर्धमानं प्रकर्षेण तापकं च ज्योतिस्तेजरस्य ज्वाला या तथोक्ता । निःश्रेयसभुवः परित्राता गोपालः । भूमिपालान् क्षुद्रकर्मफलमात्रशरणान् । प्रसभमत्यर्थम् असिर्विवेकः । लतावदाह्लादहेतुत्वात् लता । सैव मित्रवदुपकारहेतुत्वान्मित्रम् । तेन मित्रेण जित्वा । क्षुद्रतरफलाभिलाषापरिहारेणात्मवशं नीत्वा साम्राज्ये प्रत्यग्ब्रह्मणोरेकत्वलक्षणे । कीर्तिवर्मा क्षेत्रज्ञः । नरपतीनामुपासकानां तिलकः प्रधानो मुख्योऽधिकारी । पूर्वमपि ब्रह्मैव सन् भ्रमामोहेन पुनरपि ब्रह्मभावं प्रापितो येन तर्केण सोऽस्तीति शास्त्रतात्पर्यपर्यालोचनया समाधिगतमित्यर्थः । किञ्च लौकिकभाषादिभिरपि तात्पर्यप्रतिपाद्योऽसावेवेत्याह — अपिचेति । पिशाचाङ्गना इत्युपलक्षणमसंस्कृतजनानाम् । करिकुम्भकूटकुहरवत्तमोबहुलान्तःकरणाभिव्यक्तैः प्राकृतादिभाषाविशेषैरपि धर्मादिप्रतिपादनद्वारेणात्मतत्त्वचिन्तैवापाद्यत इति भावः । तेन च शान्तरसप्रायसरणिमनुसरता स्वरूपानुसन्धानाय शारीरकशास्त्रश्रवणादिविषये यस्मादहं नियुक्तः तस्माद् । भरता वैराग्यादयः । वर्णिका वेषाः । प्रकटवैराग्यादिसम्पादनायेति यावत् । अथवा तत्तच्छास्त्रार्थस्य सम्यग्भरणाद् भरताः आचार्याः । तदादेशो नाम शुश्रूषादिना समावर्जनम् । तदनुरूपनम्रतादिलक्षणवर्णिकाग्रहणं करणीयमिति भावः ॥

नटी । सविस्मयमित्यादिगतम् । उक्तञ्च —

"उपलब्धौ विरुद्धस्य पूर्वकल्पनया नृणाम् ।
अहो खल्वेतदेति यो भावो विस्मय एव सः ॥"

---

१. 'तच्छीलानां' क. पाठः.

**आकण्णाकिट्ठकठिणकोअण्डदण्डबहळघणवरिसन्तसन्तअसरधारानिअरजज्जरिज्जन्ततुरंअतरंअमाळं, णिरन्तरणिवडन्ततिक्खखग्गविक्खित्तसहत्थसत्थपळिअत्तोत्तुङ्गमाअंगमहामहीअरसहस्सं, भमन्तभुअदण्डमन्दळाहिहादघुण्णन्तसअळपत्तिसळिळसंघाअं, कण्णसेण्णसाअरं णिम्महिअ महुमहणेणव्व खीरसमुद्दं आसादिआ समरविजअळच्छी। तस्स संपदं सअळमुणिअणसिळाअणिज्जो कहं ईरिसो उवसमो संवुत्तो।**

तरङ्गमालं, निरन्तरनिपतत्तीक्ष्णखड्गविक्षिप्तस्वहस्तशस्त्रपर्यस्तोत्तुङ्गमातङ्गमहामहीधरसहस्रं, भ्रमद्भुजदण्डमन्दराभिघातघूर्णमानसकलपत्तिसलिलसङ्घातं कर्णसैन्यसागरं निर्मथ्य मधुमथनेनेव क्षीरसमुद्रमासादिता समरविजयलक्ष्मीः। तस्य साम्प्रतं सकलमुनिजनश्लाघनीयः कथमीदृश उपशमः संवृत्तः ।

इति। तदेव बहिरिहाह। आश्चर्यमाश्चर्यम्। येन तथा निजभुजबलविक्रमैकनिर्भर्त्सितसकलराजमण्डलेनाकर्णाकृष्टकठिनकोदण्डदण्डबहलघनवर्षत्सन्ततशरधारानिकरजर्जरत्तुरङ्गतरङ्गमालं निरन्तरनिपतत्तीक्ष्णखड्गविक्षिप्तस्वहस्तशस्त्रपर्यस्तोत्तुङ्गमातङ्गमहामहीधरसहस्रं भ्रमद्भुजदण्डमन्दराभिघातघूर्णमानसकलपत्तिसलिलसङ्घातं कर्णसैन्यसागरं निर्मथ्य मधुमथनेनेव क्षीरसमुद्रमासादिता समरविजयलक्ष्मीः। तस्य साम्प्रतं सकलमुनिजनश्लाघनीयः कथमीदृश उपशमः संवृत्तः। स्वहस्तशस्त्रपर्यस्ता हस्ताहतिभिर्वियोजितप्राणाः। चिरकालार्जिततपसामपि महतां दुःशक एवायमुपशमः। एवंविधस्य तु गोपालस्य सुदूर एवायम्। अतो विन्ध्यप्लवनादिवदसम्भावितं एवेति भावः।

शेमुषीपक्षे योजना—अध्यात्मचिन्ताव्यवसितमालक्ष्य विरोधमिव मन्वाना पृच्छति बुद्धिः—**आश्चर्य**मित्यादिना। कुत्सितमृणं क्षुद्रफलं कर्म साधयतीति कर्णशब्देनाहङ्कारो गृह्यते। तत्सैन्यं रागद्वेषादिलक्षणम्। तदेव सागरवत् सागरः। तं विशिनष्टि—**आकर्णे**त्यादिना। दृढगृहीतयुक्तिकोदण्डमुक्ताानिष्टापत्तिप्रसञ्जनपृषत्कविशीर्यद्ग्रहातिग्रहलक्षणाः

१. 'त इव भातीति' क. ग. घ. पाठः.

**सूत्रधारः**— आर्ये! निसर्गसौम्यमेव ब्राह्मं ज्योतिः कुतोऽपि कारणात् प्राप्तविक्रियमपि पुनः स्वभाव एवावतिष्ठते। यतः सकलभूपालकुलप्रलयकालाग्निरुद्रेण चेदिपतिना समुन्मूलितं चन्द्रान्वयपार्थिवानां पृथिव्यामाधिपत्यं स्थिरीकर्तुमयमस्य संरम्भः। पश्य तथा—

कल्पान्तवातसंक्षोभलङ्घिताशेषभूभृतः।
धैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ ६ ॥

अपिच। भगवन्नारायणांशसम्भूता भूतहिताय तथाविधपौरुषभूषणाः पुरुषाः क्षितिमवतीर्य निष्पादितकृत्याः

तुरङ्गा एव तरङ्गवत् क्षोभकत्वात् तरङ्गमाला यस्य स तथा। मातङ्गशब्देन पापापूर्वरूपकूटमुच्यते। पत्तिशब्देनागमापायधर्मवज्जन्तुसमूहोऽभिधीयते। एवंविधजलधिविलोळने तर्कणापारवाग्बाहुनाधिक्षिप्तबौद्धादिपाषण्डराजापशदशतेन येन वादकलहजयश्रीः प्राप्तेत्यर्थः। तस्य कथमिति। पराग्विषयत्वात् प्रजापतिसृष्टेः 'मनुष्याणां सहस्रेष्वि'त्यादिनाधिकारिणां दुर्लभत्वाद् विशेषतश्चाहङ्कारप्रचुरमाद्यद्वाद्यवलेपलोपविधिषु व्यापृतत्वादनुपपन्न एवायं भातीत्याशय इति।

सत्यमेवं, तथापि न कदाचिदपि प्रकृतेरन्यथाभावः। नैमित्तिकस्य तु निमित्तापायेऽपगमाद् यथापुरमेवावस्थानं सम्भवतीत्याह— **आर्ये** इत्यादिना। कुतोऽपि कारणादित्यभाणि। तदेव विक्रियानिमित्तमाह— यत इत्यादिना।

कथं तर्हि तस्य प्रकृत्यवस्थानमित्याकाङ्क्षायां दृष्टान्तेन दर्शयति— **पश्येत्यादिना**। तथेति। अनुपमक्षुब्धजलधिमेव तावत् प्रत्यक्षीकुर्वित्यर्थः। धैर्यं विक्रियाभावः। उक्तं च—

"चापलेनानुपहता सर्वार्थेष्वविकत्थना।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते ॥"

इति। प्रसादः स्वाच्छ्यम्। मर्यादा सीमा ॥ ६ ॥

**तथाविधपौरुषभूषणा** इति। तत्र पौरुषं नाम

१. 'व क्रियतामित्याह', २. 'ण्ण' ख. पाठः।

पुनः शान्तिमेव प्रपद्यन्ते । तथाहि परशुराममेवाकलयतु भवती तावत् ।

येन त्रिःसप्तकृत्वो नृपबहुलवसामांसमस्तिष्कपङ्क-
प्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः ।
यस्य स्त्रीबालवृद्धावधि निधनविधौ निर्दयो विश्रुतोऽसौ
राजन्योच्चांसकूटत्रुटनपटुरटद्घोरधारः कुठारः ॥ ७ ॥

सोऽपि स्ववीर्यादवतार्य भूमे-
र्भारं समुत्खाय कुलं नृपाणाम् ।
प्रशान्तकोपज्वलनस्तपोभिः
श्रीमान् पुनः शाम्यति जामदग्न्यः ॥ ८ ॥

तथायमपि कृतकर्तव्यः सम्प्रति परां शान्तिं प्रपन्नः ।

---

"शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥"

इति । त एव भूषणं येषां ते तथा । अस्मदादीनां मनसाप्यचिन्त्यव्यापारसमलङ्कृता इत्यर्थः ।

**वसा** मांसस्नेहः मस्तिष्कं पलम् । प्राग्भारो नाम सलिलसन्दोहगतार्वाचीनजम्बालनिकुरुम्बम् । स्त्रीबालवृद्धावधीति । स्त्र्यादीन् वर्जयित्वेत्यर्थः । निधनं पञ्चत्वम् । तस्य विधौ करणे । राजन्याः राजानः । तेषामुच्चमुन्नतम् अंस एव कूटवत् कठोरत्वात् कूटः तस्य त्रुटनं भेदनं तस्मिन् पटुर्दक्षो रटन् शब्दं कुर्वन् (कुठारो ? कठोरधारो) यस्य स तथा ॥ ७ ॥

**अवतार्य** अवरोप्य । समुत्खाय समुन्मूल्य । एवंविधपराक्रमपरिश्रान्तभुवनत्रयोऽपि भगवान् परशुरामः पुनः कृतकृत्यत्वात् प्रकृतिं प्रतिपद्यमानः स्वभावादेवं शशमीतीत्यर्थः ॥ ८ ॥

इदानीं दार्ष्टान्तिकमाह—**तथे**त्यादिना ।

---

१. 'रोऽस्थ्नां स' क. पाठः. २. 'म्त्रः ख पाठः. ३. 'कठोरो' ग. घ. पाठः. ४. 'व शमं गत इत्यर्थः' ख. पाठः.

येन च

विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम् ।
श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ॥ ९ ॥

(नेपथ्ये)

आः पाप! शैलूषाधम! कथमस्मासु जीवत्सु स्वामिनो महामोहस्य विवेकसकाशात् पराजयमुदाहरसि ।

---

एवं तावदध्यात्मोपदेशित्वाद् नाटकस्य सर्वतः प्रशान्तोऽधिकारी प्रसाधितः । इदानीं वर्तिष्यमाणाध्यात्मकथां प्रस्तौति — **येन** चेत्यादिना । येन गोपालेन श्रीकीर्तिवर्मनृपतेरुदयो निरतिशयैश्वर्यशालितया सर्वतः प्रद्योतमानत्वं कृतो निष्पादित इत्यन्वयः । किमिवेत्याह — बोधस्येवोदयः कृत इति । किं कृत्वेत्यत आह — मोहमिवोर्जितं कर्णं निर्जित्येति । कथम्भूतेनेत्याह — कर्णमिवोर्जितं मोहं निर्जित्य स्थितेन विवेकेनेत्यर्थः ॥ ९ ॥

अथवा चेदिपतिनेत्यादेरन्योऽर्थः । सकलनियन्तृब्रह्मचितिरेव पतिः स्वामी यस्य, सोऽयं चित्पतिरेवाहङ्कारः तेन चेदिपतिना चन्द्रवदाह्लादकवैदिकमार्गश्चन्द्रान्वयः । लोकायतीकृतसर्वशास्त्रार्थस्य सन्मार्गस्थापनाय प्रवृत्तत्वात् तस्य च निर्वर्तितत्वात् उपपन्ना शान्तिरिति भावः । येन च रूपेणाहङ्कारमाभासीकृत्यात्मज्ञानमापादितं, यथा खल्वहङ्कारादिवदूर्जितं मोहं निर्जित्य विवेकेन सम्यग्ज्ञानं सम्पादितमेवमित्यर्थ इति[1]

एवं तावद् विवेकेनेवोर्जितं मोहं निर्जित्य बोधस्येवोदय इति दृष्टान्तव्याजेन मुख्याधिकारिणः सम्यग्ज्ञानोत्पत्तिरभिहिता । तत्र मोहं निर्जित्येति वज्रपातोपमं वचनमाकर्ण्यासहमानोऽङ्कुशाकृष्टमददन्तिवदुद्वेलमुज्जृम्भते मदन इत्याह — **नेपथ्ये** इत्यादिना । इत आरभ्योत्तरग्रन्थसन्दर्भेण नाटकापेक्षितस्वभावाख्यानरूपकाद्यलङ्कारप्रदर्शनपूर्वकं विवेकमहामोहयोर्जयपराजयाभिनयेन वेदान्तशास्त्ररहस्यार्थं स्पष्टयतीत्यासमाप्तेस्तात्पर्यार्थः । तत्र तावन्महामोहसाराङ्कररूपमनङ्गं मूर्तिमत्त्वेन रूपयन्नुपेक्ष्यपक्षमुपक्षिपति—**आः पापेत्यादिना** । आः इति क्रोधवचने । राधकापशद !।

---

1. 'च निरूपणेनाह' क. ग. घ. पाठः,

**सूत्रधारः** — (ससंभ्रमं विलोक्य) आर्ये! इतस्तावत् ।

उत्तुङ्गपीवरकुचद्वयपीडिताङ्ग-
मालिङ्गितः पुलकितेन भुजेन रत्या ।
श्रीमाञ् जगन्ति मदयन् नयनाभिरामः
कामोऽयमेति मदघूर्णितनेत्रपद्मः ॥ १० ॥

मद्वचनाच्चायमुपजातक्रोध इव लक्ष्यते। तदपसरण-मेवास्माकमितः श्रेयः । (निष्क्रान्तौ)

प्रस्तावना ।

(ततः प्रविशति यथानिर्दिष्टः कामो रतिश्च ।)

**कामः** — (सक्रोधम् । आः पापेति पूर्वोक्तमेव पठित्वा) ननु रे रे भरताधम! ।

प्रभवति मनसि विवेको विदुषामपि शास्त्रसम्भवस्तावत् ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥ ११ ॥

---

**ससम्भ्रम**मिति । न क्वचिदपि स्थातुं पार्यत[1] इत्याशय । यस्मात् कन्दर्पदर्पो विवेकं[2] विनाशयति, तस्मादितोऽन्यत्र गच्छाम इति मन्वान आह — तदपसरणमिति ।

**प्रस्तावने**ति । वर्तिष्यमाणार्थोपक्षेप इत्यर्थः ।

**रे रे** अरे नटबटो! कुतस्त्योऽयं विवेकः यस्त्वया ब्रह्मज्ञानहेतुरुदा-हृतः । शास्त्रसंस्कारसध्रीचीनाशयानामपि तावदेव ननु विवेकः सम्भाव्यते, यावदिन्दीवरनयनानामपाङ्गपरिष्वङ्गः । अन्येषां तु का वार्तेत्येतदाह — प्रभवतीत्यादिना ॥ ११ ॥

नेपथ्ये इत्यादेरपरा योजना । यस्मादुक्तविशेषणेन तर्केण श्रवणादि-सम्पादनाय व्यवसायिनो[3] वयं तस्माद् विष्णुभक्त्यनुग्रहं शिरसा संगृह्य तत् सम्पादयाम इत्येवम् 'अथातो ब्रह्मजिज्ञासे'त्यत्राथशब्दोपात्तानामधिकारिणां व्यवसाय इत्यभाणि । अधुना

---

१. 'पर्याप्त इ', २. 'कादिकं ना' क. घ. पाठः, ३, 'ता' क. पाठः,

अपिच

रम्यं हर्म्यतलं नवाः सुनयना गुञ्जद्द्विरेफा लताः
प्रोन्मीलन्नवमल्लिकासुरभयो वाताः सचन्द्राः क्षपाः ।
इत्येतानि जयन्ति हन्त परितः शस्त्राण्यमोघानि मे
तद् भोः! कीदृगसौ विवेकविभवः कीदृक् प्रबोधोदयः ॥

रतिः — (क) अज्जउत्त! गरुओ क्खु महाराअमहामोहस्स पडिवक्खो विवेओ त्ति तक्केमि ।

कामः — प्रिये! कुतस्तवेदं स्त्रीस्वभावसुलभं विवेकाद् भयमुत्पन्नम् । पश्य —

अपि यदि विशिखाः शरासनं वा
कुसुममयं ससुरासुरं तथापि ।

(क) आर्यपुत्र! गरीयान् खलु महाराजमहामोहस्य प्रतिपक्षो विवेक इति तर्कयामि ।

"संन्यासिनोऽपि दृश्यन्ते दैवसन्दूषिताशयाः ।"

इति न्यायादमृदितकषायाणामन्तःकरणगुहायामेव कामादिप्रतिबन्धसद्भावमाह — नेपथ्ये इत्यादिना । ससम्भ्रममिति । यदा खलु कामादिप्रतिबन्धोऽङ्कुरितस्तदैवास्य चपलमालोचनं भवतीत्यर्थः । अधुना पुरुषार्थविरोधिषु रतिपतिरेव प्रधान इति तद्विलासमेव तावदाह — उत्तुङ्गेत्यादिना । तदपसरणमिति । मनसिजप्रतिबन्धेनाधिकारित्वं विनष्टप्रायमिति भावः । ततः प्रविशति यथानिर्दिष्टः काम इति । सम्प्रति कामाधीनमेव जातं जगदित्यर्थः । कामाधीनतामेव दर्शयति — रे रे इत्यादिना । अल्पमप्यवकाशं प्रतिलभ्यात्माधीनतामेवापादयत्यनङ्ग इति भावः ।

हर्म्यतलं सौधशिखरम् । द्विरेफाः शिलीमुखाः ॥ १२ ॥

रतिः । आर्यपुत्र! गरीयान् खलु महाराजमहामोहस्य प्रतिपक्षो विवेक इति तर्कयामि ।

१. 'प्रथम इ' ख. पाठः. २ 'ल्पं स्वल्पम' ग. घ. पाठः.

मम जगदखिलं वरोरु! नाज्ञा-
मिदमतिलङ्घ्य धृतिं मुहूर्तमेति ॥ १३ ॥

**तथाहि —**

अहल्याया जारः सुरपतिरभूदात्मतनयां
प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम् ।
इति प्रायः को वा न पदमपदे[1]ऽकार्यत मया
श्रमो मद्बाणानां क इव भुवनोन्माथविधिषु ॥ १४ ॥

**रतिः** — (क) अज्जउत्त! एव्वं एदं । तहवि महासहाअसम्पण्णो सङ्किदव्वो अरादी । जदोस्स जमणिअमप्पमुहा अमच्चा महाबळा सुणीअन्दि ।

**कामः**—प्रिये! यानेतान् राज्ञो विवेकस्य बलवतो यमादीनष्टावमात्यान् पश्यसि, न एते नियतमस्माभिरभियुक्तमात्राद् द्रागेव विघटिष्यन्ते । तथाहि—

(क) आर्यपुत्र! एवमेतत् । तथापि महासहायसम्पन्नः शङ्कितव्योऽरातिः । यतोऽस्य यमनियमप्रमुखा अमात्या महाबलाः श्रूयन्ते ।

**अपि यदीति** —समस्तमिदं जगत् कामपरवशमेवेत्यर्थः ॥ १३ ॥

तदेव दर्शयति — **अहल्याया** इत्यादिना । अपदे अशास्त्रीये विषये को वा पदं न प्रापितः । उन्माथो[2] नाम सर्वसाङ्कर्यसम्पादनम् ॥ १४ ॥

**रतिः** । आर्यपुत्र! एवमेतत् । तथापि महासहायसम्पन्नः शङ्कितव्योऽरातिः । यतोऽस्य यमनियमप्रमुखा अमात्या महाबलाः श्रूयन्ते ।

नन्वेते[3] यमादयो वराका अस्मत्सम्प्रयोगमात्रादेव स्वस्वरूपेणैव वियोक्ष्यन्ते इत्याह — **प्रिये** इत्यादिना । अभियुक्तमात्रात् सम्प्रयोगादेव केवलं द्राक् झटिति विघटिष्यन्ते शकलीकरिष्यन्त ।

१. 'थे' ख. पाठः. २. 'थनं ना' ख. ग. पाठः. ३. 'न्तीत्या' घ. पाठः.

अहिंसा कैव कोपस्य ब्रह्मचर्यादयो मम ।
लोभस्य पुरतः केऽमी सत्यास्तेयापरिग्रहाः ॥ १५ ॥

यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयस्तु निर्विकारचित्तैकसाध्यत्वादीषत्करसमुन्मूलना एव । अपिच स्त्रिय एवामीषां कृत्यास्तेनैतेऽस्मद्गोचर एव न वर्तन्ते । यतः

सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः ।
स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ १६ ॥

विशेषतश्चैते मदमानमात्सर्यदम्भस्तम्भलोभादिभिरस्मत्स्वामिवल्लभैरभियुज्यमाना नरपतिमन्त्रिणोऽधर्ममेवाश्रयिष्यन्ते ।

---

तदेव दर्शयति — तथाहीत्यादिना । ब्रह्मचर्यादिधर्मप्रधानत्वाद् यमादीनां तदभावे ईषत्करेणाल्पव्यापारेण सुसाध्योन्मूलना एवेत्यर्थः । कृत्यानां नाशहेतुत्वाद् मनागप्यबलाप्रसङ्गश्चेदवश्यम्भाविन्यनर्थप्राप्तिरिति भावः ॥ १५ ॥

विलोकनं प्रेक्षणम् । भाषणं वाक्सम्मिश्रणम् । विलासो नाम

"यानासनशयनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥"

इति शृङ्गारचेष्टाविशेषः । परिहासः प्रगल्भोक्तिः । केलिः क्रीडा । एते तावत् सन्तु तिष्ठन्तु । अस्मदभिप्रायसिद्धये परं स्मरणमेवालमित्याह — स्मरणमपीति ॥ १६ ॥

किञ्चात्र न योषिदपेक्षा, मनोवृत्तिभिरेव सुसाध्या इत्याह — विशेषतश्चेति । मदो नामाविद्यानिमित्तो मनस उद्रेकः । प्रीतिनिर्वृतिनिमित्तेति यावत् । अथवा —

"स एव स्वानुकूल्येन दर्शयन्नखिलं जगत् ।
यत्किञ्चित्कारितां चास्य कुर्वन् मद उदाहृतः ॥"

---

१. 'त्यं भवत्यम' ख. पाठः. २. 'स्था' क. पाठः. ३. 'ता' ख. पाठः.

**रतिः**—(क) सुदं मए तुह्माणं समदमविवेअप्पहुदीणं च एक्कं उप्पत्तित्थाणं ति ।

**कामः**—आः प्रिये ! किमुच्यत एकमुत्पत्तिस्थानमिति । ननु जनक एवास्माकमभिन्नः । तथाहि—

सम्भूतः प्रथममिहेश्वरस्य सङ्गा-
न्मायायां मन इति विश्रुतस्तनूजः ।
त्रैलोक्यं सकलमिदं विसृज्य भूय-
स्तेनाथो जनितमिदं कुलद्वयं नः ॥ १७ ॥

(क) श्रुतं मया युष्माकं शमदमविवेकप्रभृतीनां चैकमुत्पत्तिस्थानमिति ।

इति । मानश्चित्तसमुन्नतिः । उक्तं च—

"अभिमानमपि प्राहुः स्वपौरुषगुणाश्रयाम् ।
प्रतीतिं सुखमात्राणां महतीनां समुद्भवाम् ॥"

इति । मात्सर्यं परगुणासहिष्णुत्वम् । दम्भो धर्मध्वजित्वम् । स्तम्भोऽगणितगुर्वादितया[1] दण्डवत्स्थितिः । आदिशब्देनाहङ्कारादयो गृह्यन्ते । नरपतिर्महामोहः । एतेष्वन्यतमोऽपि चेदनुवर्तते तर्ह्यसौ न पुरुषार्थयोग्य इति भावः ।

**रतिः** । श्रुतं मया युष्माकं शमदमविवेकप्रभृतीनां चैकमुत्पत्तिस्थानमिति । चकाराद् विवेकमहामोहयोरपि समानान्वयत्वं श्रुतमित्यर्थः । समानजन्मभूमिकानां विवादो न घटनामञ्चतीति रत्याकूतम् ।

किमुच्यत इत्यादेरयमर्थः—एकमुत्पत्तिस्थानमिति त्वया न वचनीयम् । यतो जनकैकत्वमात्रमेवास्माकम् । नखलु जनन्येका । नापि तथाविधं सौहृदमिति । जनकैकत्वमेव दर्शयति—**सम्भूतः प्रथममित्यादिना** । अयमर्थः—कालकर्मविपाकापेक्षया परमेश्वरस्य असङ्गोदासीनस्वभावस्य मायानिमित्त एव मायायामुल्लासलक्षणः सङ्गः सञ्जायते । तेन चोल्लासेन समुल्लासिता माया महत्तत्त्वापरनामधेयं मनो नाम तनयमजीजनत् । तेन च मनसा भूभूधरसरित्सागरादिलक्षणभूतभौतिकप्रपञ्चप्रक्रियाप्रकारेणास्माकं महामोहादीनां विवेकप्रभृतीनां च कुलद्वयं विजृम्भितमिति ॥ १७ ॥

१. 'श्रीनत' घ. पाठः.

तस्य च प्रवृत्तिनिवृत्ती द्वे धर्मपत्न्यौ। तयोः प्रवृत्त्यां समुत्पन्नं महामोहप्रधानमेकं कुलम्। निवृत्त्यां च द्वितीयं विवेकप्रधानमिति।

**रतिः**—(क) अज्जउत्त! जइ एव्वं, ता किंणिमित्तं तुह्माणं सोअराणं वि ईरिसं वेरम्।

**कामः**—प्रिये!

एकामिषप्रभवमेव महीपतीना-
मुज्जृम्भते जगति वैरमिति प्रसिद्धम्।
पृथ्वीनिमित्तमभवत् कुरुपाण्डवानां
तीव्रस्तथा हि भुवनक्षयकृद् विरोधः॥ १८॥

सर्वमेवैतज्जगदस्माकं पित्र्यमुपार्जनम्। तच्चास्माभि- रतातवल्लभतया सर्वमेवाक्रान्तम्। तेषां तु विरलः प्रचारः। तेनैते पापाः साम्प्रतं पितरमस्मांश्चोन्मूलयितुमुद्यताः।

---

(क) आर्यपुत्र! यद्येवं, तत् किन्निमित्तं युष्माकं सोदराणामपि ईदृशं वैरम्।

---

वंशोदयमेव विशदयन्[1] मातृभेदमाह—**तस्य च**त्यादिना। मोहनिबन्धनत्वात् प्रवृत्तेस्तत्प्राधान्यं, विवेकायत्तत्वात् निवृत्तेरपि तत्प्राधान्यमिति।

**रतिः**। आर्यपुत्र! यद्येवं तत् किन्निमित्तं युष्माकं सोदराणामपि ईदृशं वैरम्।

**कामः**। किमप्रसिद्धवत् पृच्छ्यत इत्याह—**प्रिये** इत्यादिना। आमिषं नाम भोज्यो विषय उच्यते। एकविषयविषक्ततयान्योन्यकलहकोलाहलाकुलता खलु सहोदराणामपि प्रसिद्धेति भावः॥ १८॥

तदत्र कथमिति चेत् तदाह[3]—**सर्वमेवैत**दिति। पित्र्यमुपार्जनमिति। मनःस्पन्दनामात्रपरिकल्पितं स्वप्नप्रपञ्चवदित्यर्थः। हन्त तर्हि

---

१. 'दर्शयन्' ख. पाठः. २. 'पानल', ३. 'तमस्मत्कुलं स्व' क. पाठः.

**रतिः**—(क) सान्तं पावं सान्तं पावम् । अज्जउत्त! किं एदं पावं विद्देसमत्तेण तेहिं आरद्धम्, अहवा उवाओ वि को वि एत्थ मन्तिदो ।

**कामः**—प्रिये! अस्त्यत्र किञ्चिन्निगूढं बीजम् ।

**रतिः**—(ख) अज्जउत्त! ता किं ण उग्घाडीअदि ।

**कामः**—प्रिये! भवती स्त्रीस्वभावाद् भीरुरिति न दारुणकर्म पापीयसामुदाह्रियते ।

**रतिः**—(ग) (सभयम्) अज्जउत्त! केरिसं तम् ।

---

(क) शान्तं पापं शान्तं पापम् । आर्यपुत्र ! किमेतत् पापं विद्वेषमात्रेण तैरारब्धम्, अथवा उपायोऽपि कोऽप्यत्र मन्त्रितः ।

(ख) आर्यपुत्र! तत् किं नोद्घाट्यते ।

(ग) आर्यपुत्र! कीदृशं तत् ।

---

सामि सामि संविभज्य स्वे स्वे विषये स्वैरं विहरतां, किमिति विग्रहेणेति चेत् तत्राह—तच्चास्माभिरित्यादिना । अस्मत्पिता तावत् प्रवृत्त्यामेव प्रकृत्या प्रणयपरवशः । तेन[1] तया प्रेरितोऽस्मानेव लालयति । तेषां तु प्रत्यङ्मात्राग्रह एव, न लोकवृत्तान्तविटता । अतस्तेष्वनास्थेति भावः ।

**रतिः** । शान्तं पापं शान्तं पापम् । आर्यपुत्र! किमेतत् पापं[2] विद्वेषमात्रेण तैरारब्धम्, अथवा उपायोऽपि कोऽप्यत्र मन्त्रितः । पितरमस्मांश्चोन्मूलयितुमुद्यता इत्यतिकठोरतरकर्मकरणाग्रहश्रवणजातसन्त्राससाटोपं शान्तं पापं शान्तं पापमित्युक्तवतीत्यर्थः ।

**निगूढं** प्रच्छन्नम् । बीजं कारणम् ।

**रतिः** । आर्यपुत्र! तत् किं नोद्घाट्यते ।

स्त्रीणां नैसर्गिकी खल्वधीरतेति तां सम्भावयन्नाह—**भवतीति** । **भीरु**र्भयशीला ।

**रतिः** । आर्यपुत्र! कीदृशं तत् ।

---

१. 'अतस्तया प्रेषितो', २. 'पमपि द्वे' क. पाठः.

**कामः**—प्रिये! न भेतव्यं न भेतव्यम्। हताशानां मनोरथमात्रमेवैतत्। अस्ति किलैषा किंवदन्ती—अस्माकं कुले कालरात्रिकल्पा विद्या नाम राक्षसी समुत्पत्स्यत इति।

**रतिः**—(क) (सभयम्) हद्धी, कधं उण अह्माणं कुळे रक्खसि त्ति वेवदि मे हिअअम्।

**कामः**—प्रिये! न भेतव्यं न भेतव्यम्। किंवदन्तीमात्रमेतत्।

**रतिः**—(ख) अह ताए रक्खसीए किं कादव्वम्।

**कामः**—प्रिये! अस्ति किलैषा प्राजापत्या सरस्वती—

(क) हा धिक्, कथं पुनरस्माकं कुले राक्षसीति वेपते मे हृदयम्।

(ख) अथ तया राक्षस्या किं कर्तव्यम्।

न तत् कार्यक्षमं भवतीत्याह—**प्रिये** इति। हताशानां दैवसामग्रीरहितानां मनोरथमात्रमेवैतत् न सुसम्पादमित्यर्थः। ननु नास्त्येव तर्हि कारणम्। अस्त्येव, किन्तु गण्यं न भवतीत्याह—अस्ति किलेति। किंवदन्ती निर्मूलजनप्रवादः। यथा खलु कल्पान्तकालरुद्रप्राणकान्ता कालरात्रिनामधेया शक्तिरखिलसंहर्त्र्यपि[1] प्राणिकृतपुण्यापुण्यतत्संस्कारादिकं वर्जयित्वैव संहरति। विद्या पुनरनेकजन्मकृतसुकृतोद्रेकवशाद् गुरुदेवताप्रसादलब्धस्वोदयमात्रेणाहङ्कारादिप्रमुखं कृत्स्नमेव प्रपञ्चं[2] निर्दयमेव दन्दहीति[3]। अत ईषदसमाप्त्या कालरात्रिकल्पेत्यर्थः।

**रतिः**। हा धिक्, कथं पुनरस्माकं कुले राक्षसीति वेपते मे हृदयम्।

न भयाय कल्पत इत्याह—**किंवदन्तीमात्रमिति**।

**रतिः**। अथ तया राक्षस्या किं कर्तव्यम्।

कर्तव्यविशेषं दर्शयन्नाह—**अस्तीति**। प्रजापतेरियं प्राजापत्या हैरण्यगर्भश्रुतिलक्षणा भारती।

१. 'त्र्याखि' ग. पाठः. २. 'कृक्' क. पाठः. ३. 'दहति' ख. पाठः.

पुंसः सङ्गसमुज्झितस्य गृहिणी मायेति तेनाप्यसा-
वस्पृष्टापि मनः प्रसूय तनयं लोकानसूत क्रमात् ।
तस्मादेव जनिष्यते पुनरसौ विद्येति कन्या यया
तातस्ते च सहोदराश्च जननी सर्वं च भक्ष्यं कुलम् ॥१९॥

**रतिः** — (क) (सत्रासोत्कम्पम्) अज्जउत्त! परित्ताआहि परित्ताआहि । (इति भर्तारमालिङ्गति ।)

**कामः** — (स्पर्शसुखमभिनीय स्वगतम्)

स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशो
भयोत्कम्पोत्तुङ्गस्तनयुगभरासङ्गसुभगः ।
अधीराक्ष्या गुञ्जन्मणिवलयदोर्वल्लिरचितः
परीरम्भो मोदं जनयति च संमोहयति च ॥ २० ॥

---

(क) आर्यपुत्र! परित्रायस्व परित्रायस्व ।

---

तामेवार्थतो दर्शयति — पुंस इत्यादिना । अयमर्थः — असङ्गोदासिनेन परमपुरुषेणाविचारितरमणीया[1] माया तादृक्सम्बन्धमापाद्यात्मतनयं मनो नामासूयत । तन्मनस्तातोऽस्माकमतिचञ्चलतया कदाचिद् विवेकादिभिः परिवृतः स्वयं जडात्मा केनचित् कर्मविपाकेन विवेकवशादुपनिषद्देव्यां विद्यां नाम कन्यां जनयिष्यति । सा तु[2] कठोरा स्वोदयमात्रेणात्मव्यतिरिक्तमखिलं सनिदानमेव दहन्ती दाह्याभावादिव दवाग्निः स्वयमपि शशमीतीति[3] ॥ १९ ॥

**रतिः** । आर्यपुत्र ! परित्रा(हि ? यस्व) परित्रा(हि ? यस्व) ।

**स्वगतम्** स्तोकोच्चारणम् । परीरम्भः स्त्रीणां स्वयंग्रहाश्लेषः । मोदो हर्षः । तदुद्रेकनिमित्तं चापल्यं मोहः ॥ २० ॥

---

१. 'याविद्यात्र ता' ख. घ. पाठः. २. 'ति' ख. पाठः. ३. 'ति ॥' ख. घ. पाठः.

(प्रकाशम् । दृढं परिष्वज्य) **प्रिये ! न भेतव्यं न भेतव्यम् । अस्मासु जीवत्सु कुतो विद्योत्पत्तिः ।**

**रतिः**— (क) **अज्जउत्त! किं ताए रक्खसीए उप्पत्ती-अह्माणं पडिवक्खाणं सम्मदा ।**

**कामः— बाढम् । सा खलु विवेकेनोपनिषद्भ्यां प्रबोध-चन्द्रेण भ्रात्रा समं जनयितव्या । तत्र च सर्व एवैते शम-दमादयः प्रतिपन्नोद्योगाः ।**

(क) आर्यपुत्र! किं तस्या राक्षस्या उत्पत्तिरस्माकं प्रतिपक्षाणां सम्मता ।

तत्परित्राणोपायान्तरमपश्यन्नुपगूहनेनैवाश्वास्य प्रगल्भं प्रभाषत इत्याह — **न भेतव्यमि**त्यादिना । अस्मासु जीवत्स्विति । अयं भावः— अस्मद्गन्धमात्रं चेत् तर्हि विद्याया वार्तापि न सम्भाव्यते, त्रिभुवनमपि व्याकुलीकृत्य जीवत्सु न कुतोऽपि विद्योत्पत्तिः सम्भवति इति ।

नन्वात्मम्भरयः खलु सर्वे, अतः कथमेतद् व्यवसितमेतैः । नखलु स्वपराघाताय कन्यामुद्वाहयन्ति । तस्माद् विरुद्धमिव भातीत्यभिप्रायेण पृच्छति रतिः । आर्यपुत्र! किं तस्या राक्षस्याः उत्पत्तिरस्माकं प्रतिपक्षाणां सम्मता ।

बाढं सम्मता । कथमिति तत्राह — **सा खल्वि**त्यादिना । अय-मर्थः—वेदान्तमहावाक्यश्रवणजनिता सहविषया निर्विचिकित्सा परोक्षाकारेण जायमाना बुद्धिवृत्तिर्विद्येति निगद्यते । तत्र च वृत्तावपरोक्षतयावभासमानं निवृत्ताविद्यं चैतन्यं प्रबोधः । स एव परमानन्दस्वरूपतयाह्लादकत्वाच्चन्द्रवच्चन्द्रः । भ्रातृत्वं च समानसामग्रीकतया निरन्तरोत्पन्नत्वात् तेन सहेति ।

१. 'व प्राश्वास्य', २. 'तिसम्भव इ' क. ख. घ. पाठः.

**रतिः**— (क) कहं पुण अप्पणो विणासकारिणीए विज्जाए उप्पत्ती तेहिं दुव्विणीदेहिं सिळाहिज्जइ ।

**कामः**— प्रिये! कुलक्षयप्रवृत्तानां पापकारिणां कुतः स्वपरप्रत्यवायगणना । पश्य —

सहजमलिनवक्रभावभाजां
भवति भवः प्रभवात्मनाशहेतुः ।
जलधरपदवीमवाप्य धूमो[1]
ज्वलनविनाशमनुप्रयाति नाशम् ॥ २१ ॥

(नेपथ्ये)

(क) कथं पुनरात्मनो विनाशकारिण्या विद्याया उत्पत्तिस्तैर्दुर्विनीतैः श्लाघ्यते ।

ननु तथापि सश्लाघं स्वोच्छेदाय यत्नोऽनुपपन्न एवेत्यभिप्रायेण पृच्छति रतिः । कथं पुनरात्मनो विनाशकारिण्या विद्याया उत्पत्तिः तैर्दुर्विनीतैः श्लाघ्यते ।

(कामः । प्रिये?) निसर्गकुटिलात्मनां मानवादीनामिव सुतसम्पादनप्रयासोऽविचारितरमणीय इत्येतमर्थं दृष्टान्तेन दर्शयन्नाह — **पश्येत्यादिना** । वक्रभावः कौटिल्यम् । भव उत्पत्तिः । प्रभवत्यस्मादिति प्रभवः कारणम् । आत्मा स्वयम् । प्रभवात्मनाशहेतुरिति जनकस्य स्वस्य च नाशकारणमित्यर्थः । जलधरपदवी मेघमार्गः । यथा खलु बहलोर्ध्वत्वादिविशिष्टो धूमो मेघभूयं प्राप्य वर्षणसेचनादिना[2] बलवदनिलबलेनालं जाज्वल्यमानमपि ज्वलनं विनाशयति स्वयमपि दुरात्मा नश्यति, तथेह विवेकादयोऽस्मत्प्रद्वेषकारिण इत्यर्थः ॥ २१ ॥

एवंतावदशेषानर्थहेतोरपुरुषार्थसारसङ्ग्रहरूपस्यानङ्गवटोरात्मनो हस्तिमात्रमपि दोषमविगणय्य परदोषमेव पश्यतो दुरात्मनः पृष्ठीकृतशास्त्रार्थस्य सभायां सतामसाहङ्कारसमुद्वेलसञ्जल्पितं समाकर्ण्य तदसहमानोऽशेषपुरुषार्थपुरमूलस्तम्भो[3] विवेकः प्रवृत्त इत्याह — नेपथ्य इत्यादिना ।

१. 'घनतरतरुघर्षजो हि वह्निर्विपिनवि' इति मूलकोशपाठः. २. 'विलोप्य' क. ख. पाठः. ३. 'प' ख. पाठः.

आः पाप! दुरात्मन्! कथमस्मानेव पापकारिण इत्याक्षिपसि। ननु रे —

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।

उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ २२ ॥

इति पौराणिकीं गाथां पुराणविद उदाहरन्ति। अनेन चास्माकं जनकेनाहङ्कारानुवर्तिना जगत्पतिः पितैव तावद् बद्धः। महामोहादिभिश्च स एव बन्धः सुदृढतां नीतः।

---

अथवा निःश्रेयसे प्रवृत्तानां प्रतिबन्धप्राबल्यात् तत्परिहारे यत्नबाहुल्येन भाव्यमित्यभिप्रायेणाधुना

"नहि कल्याणकृत् कश्चिद् दुर्गतिं तात! गच्छति।"

इति वचनात् केनचित् कर्मविपाकेन कस्यापि सुकृतिनः चित्तापवरक एव विवेको भवतीत्याह — नेपथ्य इति। अस्मानेवेति। साधव एव सन्तः साम्प्रतमारोपितासाधुत्वभूरिभाराः। अहो विपरीतमुपस्थितमित्येवकारार्थः। ननु शास्त्रार्थज्ञम्मन्यैरपि पितृवधादिकं क्रियत एव युष्मदीयैरपि इत्याशङ्क्याह — ननु रे इत्यादिना। अवलिप्तस्य दोषयुक्तस्य। उत्पथं प्रतिपन्नस्य उल्लङ्घितशास्त्रमर्यादस्य ॥ २२ ॥

नन्वेवं तर्हि सकलपुरुषार्थसाधनमनोनिरोधनप्रयासोऽकाण्डताण्डवित एवेति चेत् तत्राह। अथवा उल्लङ्घितशास्त्रमर्यादानामनुशासनं शास्त्रीयमेवेत्युक्तम्। हन्त तर्हि मनसः कोऽपराध इति चेत् तत्राह — अनेनेति। अहङ्कारानुवर्तिना अहङ्काराधीनेन मनसा सकलजगत्कारणं स प्रत्यगात्मा नित्यशुद्धबुद्धमुक्तपरमानन्दस्वभावः परमेश्वरोऽविचारितरमणीयकर्तृत्वभोक्तृत्वादिलक्षणरज्जुखण्डैरजितात्मा दुरुच्छेद्यैरात्मसात्सम्पादनेन निबद्ध इत्यर्थः। नन्वेवं तर्हि मनोनिरोध एव क्रियतां, किमिति तत्सन्तानोच्छेदेनेति चेत् तत्राह — महामोहादिभिरिति। दृढत्वं नामात्यन्तानात्मत्वेन सम्प्रतिपन्नशरीरकलत्रपुत्रमित्रमात्रादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेत्यभेदाभिमानप्रविजृम्भणपरिभ्रमणमिति।

---

१. 'कार्यं भवति शासनम्।' इति मूलकोशपाठः.

**कामः**— (समन्तादवलोक्य) प्रिये! अयमस्माकं कुले ज्यायान् मत्या देव्या सह विवेक इत एवाभिवर्तते। य एषः—

रागादिभिः स्वरसचारिभिरात्तकान्ति-
निर्भर्त्स्यमान इव मानधनः कृशाङ्गः।
मत्या नितान्तकलुषीकृतया शशाङ्कः
कान्त्येव सान्द्रतुहिनान्तरितो विभाति॥ २३॥

तन्न युक्तमिहास्माकमवस्थानम्।

(इति निष्क्रान्तौ।)

**विष्कम्भकः॥**

---

**समन्तादवलोक्येति**। अयमर्थः—सर्वतो दिक्षु वादिषु निरूप्यमाणेषु सर्वानर्थनिदानतैवास्माकमिह परिशिष्यते इत्यात्मगतमेवालोच्येति। अविप्रतिपन्नतया सकलसज्जनैः सम्भाव्यमानत्वात् ज्यायान् ज्येष्ठ इत्यर्थः। य एष विभातीत्यन्वयः। य इति पूर्वोक्तः। एष इति प्रत्यक्षः। कथंभूतः। कृशाङ्गः। क इव। निर्भर्त्स्यमान इव मानधनः। यथा खलु लोके कश्चिदभिमानी बहुभिर्भर्त्स्यमानो निष्प्रभो भवत्येवमयमपि रागादिभिः। आत्तकान्तिः स्वीकृतप्रभः। ननु महाप्रभावः खलु विवेकः तस्य कथमविवेकनिमित्तरागादिभिः परिभव इति चेत् तत्राह—स्वरसचारिभिरिति। शास्त्रसंस्कारसध्रीचीनाशयानामपि विषयसान्निकर्षाद् दयादिकर्म पुरस्कृत्य इयमनाथा दुर्बला कृशाङ्गी मामेव शरणं गता कथं मद् विना जीवेत्, सर्वथा इयं मया परिरक्षणीयेत्येवमादिप्रकारेण शनकै रागादयः प्रगल्भन्त इति भावः। नितान्तकलुषीकृतयेति अविचारितसिद्धभेदव्यवहारपरिभ्रमणपरिश्रान्त्या नितान्तमत्यर्थमापन्नतया मत्या सहेत्यर्थः। सान्द्रतुहिनं बहलप्रालेयं, तेन तिरोहितः॥ २३॥

यथा खलु विरोधित्वाद् द्युमणिद्युतिसन्दोहसाहचर्यं नैशतमसो न घटते, एवं विवेकेन सहास्माकमिहावस्थानमनुपपन्नमित्यभिप्रायेण तिरोहिताविव्याह— **तन्न युक्तमिति**। विवेकोदयसमकालमेव मदनादिमन्दीभाव इति भावः॥

(ततः प्रविशति राजा विवेको मतिश्च ।)

**राजा —** (विचिन्त्य) प्रिये! श्रुतं त्वयास्य दुर्विनीतस्य कामवटोर्मदविस्फूर्जितं वचः, यदस्मानेव पापकारिण इत्याक्षिपति ।

**मतिः —** (क) अज्जउत्त! किं अप्पणो दोसं लोओ विआणादि ।

**राजा —** पश्य,

असावहङ्कारपरैर्दुरात्मभि-
र्निबध्य तैः पाशशतैर्मदादिभिः ।
चिरं चिदानन्दमयो निरञ्जनो
जगत्पतिर्दीनदशामनीयत ॥ २४ ॥

(क) आर्यपुत्र! किमात्मनो दोषं लोको विजानाति ।

"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥"

इति वचनात् प्राकृतसंस्कृतवाक्संमिश्रितपात्रद्वयपरिग्रहेण वृत्तवर्तिष्यमाणकथासङ्ग्रहो विष्कम्भक इति ।

**मदविस्फूर्जितं** दृप्तप्रलपितम् ।

सूक्ष्मार्थविवेचनक्षमा बुद्धिवृत्तिर्मतिः । आर्यपुत्र! किमात्मनो दोषं लोको विजानाति ।

सम्प्रति मया सह सम्यग्ज्ञानसमुत्सार्यसंसारस्वरूपमात्मन्यविद्यापरिकल्पितं निरूपयति — **असावि**त्यादिना । अहङ्कारः परः प्रधानो येषां तैर्दुरात्मभिर्दुराशयैर्मदादिभिः । आदिशब्देन मानमात्सर्यादयो गृह्यन्ते । पाशशतैर्मलमायाकर्मलक्षणैर्नियम्य दीनदशां प्रापितो जगत्पतिरित्यन्वयः । चिरं निबध्येति । संसारस्यानादित्वात् तन्निबन्धनबन्धस्याप्यनादित्वमित्यर्थः । ननु तर्हि दुःखित्वमेवास्य स्वरूपमित्याशङ्क्याह — चिदानन्दमय इति । निरञ्जनो निर्लेपः ॥ २४ ॥

१. 'मात्स', २. 'र्मायाल' ख. पाठः.

त एते पुण्यकारिणः वयं तु तन्मुक्तये प्रवृत्ताः पापकारिण इत्यहो जितं दुरात्मभिः ।

**मतिः**—(क) अज्जउत्त ! जदो सो सहआणन्दसुन्दरसहावो णिच्चप्पआसप्फुरन्तसअळत्तिहुअणप्पआरो परमेस्सरो सुणीअदि, ता कहं एदेहिं दुव्विअड्ढेहिं बंधिअ महामोहसाअरे णिक्खित्तो ।

**राजा**—प्रिये !

सततधृतिरप्युच्चैः शान्तोऽप्यवाप्तमहोदयो-
ऽप्यधिगतनयोऽप्यन्तःस्वच्छोऽप्युदीरितधीरपि ।
त्यजति सहजं धैर्यं स्त्रीभिः प्रतारितमानसः
स्वमपि यदयं मायासङ्गात् पुमानिह विस्मृतः ॥ २५ ॥

(क) आर्यपुत्र ! यतोऽसौ सहजानन्दसुन्दरस्वभावो नित्यप्रकाशस्फुरत्सकलत्रिभुवनप्रचारः परमेश्वरः श्रूयते, तस्मात् कथमेतैर्दुर्विदग्धैर्बन्धित्वा महामोहसागरे निक्षिप्तः ।

**जितमिति** । विपरीतमुपस्थितमित्यर्थः ।

तत्र विरोध इति मन्वाना पृच्छति मतिः — आर्यपुत्र ! यतोऽसौ सहजानन्दसुन्दरस्वभावो नित्यप्रकाशस्फुरत्सकलत्रिभुवनप्रचारः परमेश्वरः श्रूयते, तस्मात् कथमेतैर्दुर्विदग्धैर्बन्धित्वा महामोहसागरे निक्षिप्तः ।

**सततधृतिरिति** । सन्ततधैर्ययुक्तो भार्याकेशग्रहणादिष्वपि युधिष्ठिरादिसमोऽथवा उर्वश्यादिविप्रलभ्यमानपुरन्दरपुरगतपुरूहूतसुतोपमः । उच्चैः शान्तोऽपि गाङ्गेयादितुल्यः । अवाप्तमहोदयोऽपि प्राप्तसम्यग्ज्ञानो याज्ञवल्क्यादिसमः । अथवा महोदय ऐश्वर्यं, प्राप्तैश्वर्यः कार्तवीर्यादितुल्यः । अथवा प्राप्तमहोदयो विशेषज्ञानवान् विदुरादिसमः । अधिगतनयो बृहस्पतिसमः । अन्तःस्वच्छो बलभद्रादितुल्यः । उदीरितधीः हिरण्यगर्भादि-

१. 'धर्मिव म' क. ख. पाठः.

**मतिः** — (क) अज्जउत्त ! णं अन्धकारळेहाए सहस्सरस्सिणो तिरक्कारो, जं माआए तह पप्फुरन्तमहप्पआससाअरस्स देवस्स वि अहिहवो ।

**राजा** — प्रिये ! अविचारितसिद्धेयं वेशविलासिनीव माया असतोऽपि भावानुपदर्शयन्ती पुरुषं वञ्चयति । पश्य —

स्फटिकमणिवद् भास्वान् देवः प्रगाढमनार्यया
विकृतिमनया नीतः कामप्यसङ्गतविक्रियः ।

(क) आर्यपुत्र ! नन्वन्धकारलेखया सहस्ररश्मेस्तिरस्कारो, यन्मायया तथा प्रस्फुरन्महाप्रकाशसागरस्य देवस्याप्यभिभवः ।

वदुत्कटविज्ञानवानपि । सहजं धैर्यं निसर्गसिद्धं खलु धैर्यम् । विक्रिया त्वौपयिकीति भावः । प्रतारितं वञ्चितं मानसं मनो यस्य स तथा । सन्ततधैर्यादिगुणयुक्तोऽप्यबलाविलासविलोकनबलात् तूलायत इति यथायं दृष्टान्तः, एवमेवायं परमेश्वरोऽपीत्याह — स्वमपि यदयमिति । असङ्गोदासीनचिदानन्दस्वरूपोऽपि परमेश्वरो मायायोषित्सङ्गादेव विस्मृतनिजरूप इत्यर्थः ॥ २५ ॥

नन्वेवमसङ्गोदासीनस्वभावता कथमस्येति मन्वाना पृच्छति मतिः— आर्यपुत्र ! नन्वन्धकारलेखया सहस्ररश्मेस्तिरस्कारो, यन्मायया तथा प्रस्फुरन्महाप्रकाशसागरस्य देवस्याप्यभिभवः इति ।

अघटमान[2]विधानपटीयस्त्वान्मायाया न कोऽपि विरोध इत्यभिप्रेत्याह — **अविचारितसिद्धेति** । वेशविलासिनीवेति । यथा खलु लोके काचन गणिका स्वयमविद्यमानानपि प्रणयपेशलादीन् मृदुलभावेन बहिः प्रकाश्य पुरुषं भ्रमयत्येवमियमपि माया परमेश्वरमात्मवशं नयतीत्यर्थः ।

ननु तर्हि 'संसर्गजा दोषगुणा भवन्ती'ति न्यायात् मायासङ्गदोषदूषितः स्यादयमपीत्याशङ्क्याह — **स्फटिकमणिवदित्यादिना** ।

१. 'षदुत्सङ्गसङ्गा' ख. पाठः. २. 'घटनाप' ग. पाठः.

न खलु तदुपश्लेषादस्य व्यपैति रुचिर्मनाक्
प्रभवति तथाप्येषा पुंसो विधातुमधीरताम् ॥ २६ ॥

**मतिः** —(क) अज्जउत्त ! किं पुण काळणं जेण तह उदारचरिदं दुव्विअड्ढा पआरेदि ।

**राजा** —न खलु प्रयोजनं कारणं वा विलोक्य माया प्रवर्तते । स्वभावः खल्वसौ स्त्रीपिशाचीनाम् । पश्य,

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।

(क) आर्यपुत्र ! किं पुनः कारणं, येन तथोदारचरितं दुर्विदग्धा प्रतारयति ।

भास्वान् भारूपः । देवो द्योतनात्मकः स्वतो विक्रियासम्बन्धरहितः । प्रगाढमत्यर्थम् । विकृतिं विक्रियाम्[1] । ननु तर्हि विकारीत्याशङ्क्याह[2]—कामपीति । निरूपणक्षमा न भवतीत्यर्थः । ननु[3] तथापि विक्रियासम्बन्धोऽस्तीत्याशङ्क्याह — असङ्गतविक्रिय इति । तर्हि कारणदोषसम्बन्ध इत्याशङ्क्याह— न खल्विति । तस्या मायाया उपश्लेषात् सम्बन्धात् रुचिर्दीप्तिः मनाक् स्वल्पमपि नापगच्छति । तथापि सा प्रगल्भत इत्यर्थः । उक्तञ्च —

"अहो बलमविद्याया अतिशेते न कश्चन ।
अग्न्यादिभयहेतोर्या ब्रह्मणोऽपि भयङ्करी ॥
निर्भयो भयकृद् देव ईश्वराणामपीश्वरः ।
भयं तस्यापि जनयेन्नाज्ञानस्यास्त्यगोचरः ॥"

इति ॥ २६ ॥

नन्वयं स्वभावो मायायाः, किं वा कारणमप्यस्तीति पृच्छति मतिः— आर्यपुत्र ! किं पुनः कारणं येन तथोदारचरितं दुर्विदग्धा प्रतारयति ।

न खलु प्रयोजनमित्यादिना स्त्रीणामेवमेव स्वभाव इत्युक्तं, तदेव

१. 'याम् । कामपि । निरू' ग. पाठः. २. 'ह— असङ्गतविक्रिय इति । तथापि सा' क. पाठः. ३. 'ननु तर्हि विकारीत्याशङ्क्याह — नखल्विति । तस्या मा' ग. पाठः.

एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ २७ ॥

अस्ति चापरमपि कारणम् ।

**मतिः** — (क) अज्जउत्त ! किं णाम तं काळणं ।

**राजा** — एवमनया दुराचारया चिन्तितं — यदहं तावद् गतयौवना वर्षीयसीजाता। अयं च पुराणपुरुषः स्वभा-

(क) आर्यपुत्र! किं नाम तत् कारणम् ।

दर्शयति — **सम्मोहयन्ती**त्यादिना । पीनपीवररमणीयस्तनकलशादि-प्रदर्शनादिना सम्मोहयन्ति सकलान्यपीन्द्रियाणि सहसैव समाकृष्यात्मवशं नीत्वा मतिविभ्रंशं कुर्वन्तीत्यर्थः । मदयन्ति सल्लापानुकूल्यादिना हर्षयन्ति । विडम्बयन्ति उपहासकरगपाणिग्रहणादिना क्रीडयन्ति । निर्भर्त्सयन्ति प्रेम-कलहप्रातिकूल्याचरणादिना अधिक्षिपन्ति । रमयन्ति आनुकूल्यादिना अभि-मतदानेनानन्दयन्ति । विषादयन्ति गोत्रान्तरसम्बन्धसम्भावनाशङ्कया कदा-चिदननुकूलतया कातरयन्ति । सदयमिति क्रियाविशेषणम् । यथा स्नेहो भवति तथा नराणां हृदयं सानुरागं प्रविश्येत्यर्थः । किं नामेति कुत्सायाम् । कुम्भीपाकादिनिश्शेषनरकनिकरेष्वप्येनं प्रेरयितुं समर्था इत्यर्थः । उक्तञ्च—

"सृष्टास्तथा विधात्रा किं कार्यमुद्दिश्य योषितः ।
आ ज्ञातं नरकावासानशून्यं कर्तुमायतान् ॥"

इति ॥ २७ ॥

न केवलं स्वभावादेव माया प्रवर्तत इत्याह — अस्तीत्यादिना ।

**मतिः** । आर्यपुत्र! किं नाम तत् कारणम् ।

**दुराचारया** दुष्टाचरणया विपरीतप्रत्ययपरयेत्यर्थः । किं तच्चिन्तित-मिति तदाह — यदहं तावदिति । गतयौवना निवृत्ततारुण्या अतिशयेने-त्यर्थः । वर्षीयसी अतिशयेन वृद्धा । ननु पुरुषस्यापि तथात्वात् समानसख्यं स्यादित्याशङ्क्याह — अयं चेति । पुरापि नव एवेति पुराणः । चकाराद-धुनापि नूतनः । पूर्णत्वात् पुरुषः । किन्तु विशेषोऽस्तीत्याह — स्वभावा-

१. 'दिना', २. 'प्रपातयि' ख. पाठः. ३. 'ष्टाः कष्टा वि' क. ग. घ. पाठः.

वादेव विषयरसविमुखः । ततः स्वतनयमेव परमेश्वरपदे निवेशयामीति । तमेव मातुरभिप्रायमासाद्य नितान्ततत्प्रत्यासन्नतया तद्रूपतामिवापन्नेन मनसा नवद्वाराणि पुराणि रचयित्वा,

एकोऽपि बहुधा तेषु विच्छिद्येव निवेशितः ।
स्वचेष्टितमथो तस्मिन् निदधाति मणाविव ॥ २८ ॥

**मतिः**—(विचिन्त्य) (क) जारिसी मादा पुत्तो वि तारिसो एव्व जादो ।

**राजा**—ततोऽस्मावहङ्कारेण चित्तस्य ज्येष्ठपुत्रेण नप्त्रा परिष्वक्तः । ततश्चासावीश्वरः—

(क) यादृशी माता पुत्रोऽपि तादृश एव जातः ।

दिति । असङ्गत्वादित्यर्थः । एवं मायाप्रवृत्तेः कारणं दर्शितम् । इदानीं प्रयोजनं दर्शयति—ततः स्वतनयमित्यादिना । परमेश्वरपदे निवेशयामीति । परमेश्वरमाच्छाद्य स्वतनयमेवात्मत्वेन ज्ञापयामीत्येवमनया निरूपितमित्यर्थः । भवत्वेवं दुराशा मायायाः । किमिति तत्पुत्रो मनस्तथा प्रवर्तत इति चेत् तत्राह—तमेवेत्यादिना । नितान्तप्रत्यासत्तिरतिशयेन सान्निध्यम् । तादूप्यं नाम तप्तायःपिण्डवत् तदाकारभजनम् । पुराणि शरीराणि । आत्मचैतन्यावज्वलनबलेन ईश्वरमवधीर्याहमेवेश्वर इत्येवंस्थितमनःस्पन्दितं जगदित्यर्थः ।

तेन पुनः किमकारीति तत्राह—एकोऽपीत्यादिना । एक एव सन् परमेश्वरो ब्रह्मादिस्तम्बपर्यन्तान्तःकरणानामनेकत्वाद् विच्छिद्येवेत्यर्थः । स्वचेष्टितं कर्तृत्वादिलक्षणं तस्मिन्नीश्वरे निदधात्यारोपयति । यथा खलु स्वच्छतरस्फटिकमणिरविक्रियोऽपि सन्निहितजपाद्याकारं भजते, एवमीश्वरोऽपि बुद्धिगतकर्तृत्वादिकं भजत एवेत्यर्थः ॥ २८ ॥

**मतिः** । यादृशी माता पुत्रोऽपि तादृश एव जातः । तादृशत्वं नाम मातृवदघटमानविधानपटीयस्त्वम् ।

मनःशब्दवाच्यान्तःकरणोपाध्यनुसारेणायं परमेश्वरो नरीनर्तीत्युक्तं,

१. 'तं न स्पन्दितं जगतीत्य' ख. पाठः.

जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं
पुत्रा मित्रमरातयो वसु बलं विद्यासुहृद्बान्धवाः ।
चित्तस्पन्दितकल्पनामनुभवन् विद्वानविद्यामयीं
निद्रामेत्य विघूर्णितो बहुविधान् स्वप्नानिमान् पश्यति ॥

**मतिः** — (क) अज्जउत्त! एव्वं दीहदीहतरणिद्दाविद्दाविअप्पबोहे परमेस्सरे कहं पबोहुप्पत्ती भविस्सदि ।

**राजा** — (सलज्जमधोमुखस्तिष्ठति ।)

**मतिः** — (ख) किन्ति गुरुअरळज्जाभरणमिदसेहरो तूण्हींभूदोसि ।

**राजा** — प्रिये! सेर्ष्यं प्रायेण योषितां भवति हृदयम् । तेन सापराधमिवात्मानं शङ्के ।

---

(क) आर्यपुत्र! एवं दीर्घदीर्घतरनिद्राविद्रावितप्रबोधे परमेश्वरे कथं प्रबोधोत्पत्तिर्भविष्यति ।

(ख) किमिति गुरुतरलज्जाभरनमितशेखरः तूष्णींभूतोऽसि!

---

ततः किं कृतवानित्याकाङ्क्षायामाह — नप्तेत्यादिना । नप्त्रा पौत्रेण ।

**विघूर्णितः** व्याकुलीभूतः । स्वप्नप्रपञ्चवद् दृष्टादृष्टनष्टस्वरूपान् पदार्थान् पश्यतीत्यर्थः ॥ २९ ॥

एवं तर्ह्यविद्यातत्कार्यैः परिवृतत्वात् कथं नु नाम बोधोदय इति पृच्छति मतिः — एवं दीर्घदीर्घतरनिद्राविद्रावितप्रबोधे परमेश्वरे कथं प्रबोधोत्पत्तिर्भविष्यतीति ।

इयं तावदत्यन्तसूक्ष्मेक्षिकादक्षा । तदहमेनां किं वक्ष्यामीत्यात्मन्येवालोचयन् शालीनतयापि स्थित इत्याह — सलज्जमिति ।

**मतिः** । किमिति गुरुतरलज्जाभरनमितशेखरस्तूष्णींभूतोऽसि ।

त्वादृश्यः खलु सन्त्येवोत्तमाः स्त्रियः । तथापि बाहुल्येन कलुषीकृताशया एव योषित इति मन्वान आह — **सेर्ष्यमिति** ।

**मतिः** — (क) अण्णाओ ताओ इत्थिआओ, जाओ सरसप्पउत्तस्स वा धम्मपहवावारप्पवुत्तस्स वा भत्तुणो हिअअदिअं विहणन्दि ।

**राजा** — प्रिये !

मानिन्याश्चिरविप्रयोगजनितासूयाकुलाया भवे-
च्छान्त्यादेरनुकूलनादुपनिषद्देव्या मया सङ्गमः ।
तूष्णीं चेद् विषयानपास्य भवती तिष्ठेन्मुहूर्तं ततो
जाग्रत्स्वप्नसुषुप्तिधामविरहात् प्राप्तः प्रबोधोदयः ॥ ३० ॥

**मतिः** — (ख) अज्जउत्त ! जदि एवं कुळप्पहुणो दिढगं-

(क) अन्यास्ताः स्त्रियः, याः स्वरसप्रवृत्तस्य वा धर्मपथव्यापारप्रवृत्तस्य वा भर्तुर्हृदयेप्सितं विघ्नन्ति ।

(ख) आर्यपुत्र ! यद्येवं कुलप्रभोर्दृढग्रन्थिनिष्ठापितबन्धमोक्षो भवति,

**मतिः** । अन्यास्ताः स्त्रियः, याः स्वरसप्रवृत्तस्य वा धर्मपथव्यापारप्रवृत्तस्य वा भर्तुर्हृदयेप्सितं विघ्नन्ति ।

अहं तावदनुकूलैवार्यपुत्रस्येति मत्योक्तः स्वाशयमाविष्कुर्वन्नाह — **मानिन्या** इति । मानिन्या दयिताया उपनिषद्देव्या मया सङ्गमो यदि भवेत् तर्हि प्रबोधोदयः प्राप्त इत्यन्वयः । यदि भवेदिति किमुच्यत इत्याशङ्क्याह — मानिन्या इति । ननु प्रियसङ्गमादिभिर्मानः स्त्रीणां विनश्यत्येव । सत्यम्, अनपराधिनं प्रति । इह तु मम महानपराध इत्याह — चिरविप्रयोगेति । कथं तर्हि तया सह तव सङ्गम इति, तत्राह — शान्त्यादेरिति । शान्तिश्रद्धाविष्णुभक्त्यादयः तां प्रसाद्यानीय मया सह संयोजयिष्यन्तीत्यर्थः । किन्तु स्वल्पं प्रार्थ्यमस्तीत्याह—तूष्णीं चेदिति । शान्त्यादिसामग्र्यां सत्यां मतिप्रसादादवस्थात्रयातीतपरमार्थवस्तुविषयसम्यग्ज्ञानं झटिति जायत इत्यर्थः ॥ ३० ॥

पतिव्रतानां भर्तुः प्रियेणैवालमिति मन्वाना ब्रवीति मतिः— आर्यपुत्र ! यद्येवं कुलप्रभोर्दृढग्रन्थिनिष्ठापितबन्धमोक्षो भवति, ततस्तया नित्यानुबद्ध एवार्यपुत्रो भवतु । सुष्ठु मे प्रियमिति ।

१. 'दभिमानः' ख. ग. घ. पाठः.

थिणिद्वाविअबन्धमोक्खो भोदि, तदो ताए णिच्चानुबद्धो जेव्व अज्जउत्तो भोदु। सुट्ठु मे पिअम्।

**राजा**—यद्येवं प्रसन्नासि, सिद्धास्तर्ह्यस्माकं मनोरथाः।

तथाहि—

बद्ध्वैको बहुधा विभज्य जगतामादिः प्रभुः शाश्वतः
क्षिप्त्वा यैः पुरुषः पुरेषु परमो मृत्योः पदं प्रापितः।
तेषां ब्रह्मभिदां विधाय विधिवत् प्राणान्तिकं त्विद्यया
प्रायश्चित्तमिदं मया पुनरसौ ब्रह्मैकतां नीयते॥ ३१॥

तद् भवतु। प्रस्तुतविधानाय शमादीनुद्योजयामः।

(निष्क्रान्तौ।)

इति श्रीकृष्णमिश्रयतिविरचिते प्रबोधचन्द्रोदये मायाविलसितं नाम प्रथमोऽङ्कः॥

---

ततस्तया नित्यानुबद्ध एवार्यपुत्रो भवतु। सुष्ठु मे प्रियम्।

---

इदानीमानुकूल्यमालक्ष्य सन्तुष्टः सन्नाह—**यद्येवमिति**।

किं तन्मनोरथेति तदाह—**बद्ध्वैक** इत्यादिना। **बद्ध्वा** अवच्छिद्य बहुधा करिनरतुरगादिभेदेन विभज्य पृथक्कृत्य यैर्मोहादिभिरयमात्मा पुरेषु शरीरेषु क्षिप्त्वा, मृत्योरित्युपलक्षणं, जन्मादिधर्मभाक् कृतः, तेषामखण्डैकरसपरिपूर्णब्रह्मभिदां महामोहादीनामविद्यमानतापादनेनायं क्षेत्रज्ञोऽस्माभिर्ब्रह्मपदेऽभिषेचनीय इत्यर्थः॥ ३१॥

किं तर्हि साम्प्रतं कर्तव्यमिति तत्राह—**तद् भवत्वित्यादिना**। शमदमादिप्रसादसाध्यत्वादस्यार्थस्य, अतस्तान् विशिष्टदेशकालपात्रेषूद्योजयामः सन्नाहयाम इत्यर्थः॥

इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृतभगवता कृते नाटकाभरणे प्रथमोऽङ्कः॥

---

१. नत्वादयं' ख.पाठः.

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति दम्भः)

**दम्भः**— आदिष्टोऽस्मि महाराजमहामोहेन । यथा — वत्स ! दम्भ ! प्रतिज्ञातं सामात्येन विवेकेन प्रबोधोदयाय । प्रेषिताश्च तेषु तेषु तीर्थेषु शमदमादयः । स चायमस्माकमुपस्थितः कुलक्षयो भवद्भिरवहितैः प्रतिकर्तव्यः । तत्र पृथिव्यां परमं मुक्तिक्षेत्रं वाराणसी नाम नगरी । तद् भवांस्तत्र गत्वा चतुर्णामप्याश्रमाणां निःश्रेयसविघ्नाय प्रयततामिति । तदिदानीं वशीकृतभूयिष्ठा मया वाराणसी । संपादितश्च स्वामिनो यथानिर्दिष्ट आदेशः । तथाहि मदधिष्ठितैरिदानीम् —

---

"प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थः संविधानसमाश्रयः ॥"

एवं तावन्महामोहसारसङ्ग्रहसाराङ्कुररूपकन्दर्पदर्पो दर्शितः । पूर्वं प्रसङ्गाच्च कादाचित्कत्वेन विवेकस्यापि सद्भावप्रदर्शनेनाविद्याविलसितभेदप्रपञ्चस्य सम्यग्ज्ञाननिरस्यत्वं चातीताङ्कावसाने प्रदर्शितम् । सम्प्रति तु सकलपुरुषार्थसाधनतया विवेकाद्याश्रयणमेव श्रेयोर्थिभिः करणीयमिति दर्शयितुमत्यन्तोपहेयरूपमहामोहादिविस्फूर्जितमेव स्फोरयति — **ततः प्रविशतीत्यादिना** । तत्रापि किञ्चिद्विवेकवशात् पुण्यक्रियासु प्रवर्तमानस्य पुण्यविरोधी दम्भ इति तत्प्रवेशमेवाह तावद् —दम्भ इत्यादिना । स पुनरात्मगतमेव मोहादेशमालोचितवानित्याह— आदिष्ट इति । तदेव दर्शयति — यथेति । अस्मन्मूलोन्मूलनाय किल प्रतिज्ञातं विवेकेनेत्युक्तम् । ननु न प्रतिज्ञामात्रात् साध्यसिद्धिरित्याशङ्क्याह — प्रेषिताश्चेति । अवहितैरिति । क्वचित् कोणे कश्चिदपि शान्त्याद्यालिङ्गितो यथा न रमेत, तथा यतनीयमित्यर्थः । निःश्रेयसविघ्नाय यत्नो नाम तत्र तत्र दम्भादिभिराक्रान्तत्वम् । दम्भग्रहगृहीताश्चेन्न पुरुषार्थयोग्या भवन्तीति

---

१. 'हसंग्रह' क. पाठः. २. 'क्वापि' ग. पाठः. ३. 'प्रादर्शि । स' क. पाठः.

वेश्यावेश्मसु शीधुगन्धिललनावक्त्रासवामोदितै-
नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरात् प्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवाधूर्तैर्जगद् वञ्च्यते ॥ १ ॥

(विलोक्य) कोऽप्ययं पान्थो भागीरथीमुत्तीर्य साम्प्रतमित एवाभिवर्तते । यथाचायं —

ज्वलन्निवाभिमानेन ग्रसन्निव जगत्त्रयीम् ।
भर्त्सयन्निव वाग्जालैः प्रज्ञयोपहसन्निव ॥ २ ॥

तथा तर्कयामि नूनमयं दक्षिणाराढाप्रदेशादागतः । तदस्मादार्यस्याहङ्कारस्य वृत्तान्तमवगच्छामि । (इति परिक्रामति।)

---

भावः । वशीकृतभूयिष्ठेति । बाहुल्येन मदधीना एव क्षे[त्र]वर्तिन इत्यर्थः । न केवलमेतदेव, शत्रवश्च परिभूता इत्याह -- सम्पादितश्रीरि[ति] ।

नितरां भरो निर्भरः । दिवाधूर्ताः घस्रमलिम्लुचाः ॥ १ ॥

एवं दम्भबाहुल्यं प्रदर्श्याहङ्कारगरिमाणं दर्शयन्नाह — **कोऽप्ययमिति** ।

येन प्रकारेणायमहङ्कार एव स्यात् तथाप्रकारं प्रदर्शयन्नहङ्कारस्वरूपं संगृह्णाति -- **यथा चायमिति** । अभिमानेन कुलीनत्वादिनिमित्तेन । ग्रसन् भक्षयन् । त्रयाणां लोकानां समाहारो जगत्त्रयी । तदेतदहमेवेत्यभिमान इत्यर्थः । भर्त्सयन्नाधिक्षिपन् । वाग्जालैः प्रगल्भोक्तिभिः । **प्रज्ञया** आशुग्रहणसामर्थ्यलक्षणया ॥ २ ॥

दक्षिणाराढा खलु समग्राहङ्कारनिवेशस्थानम् । तस्मादागत इवायं लक्ष्यते । तदार्यवृत्तान्तमेनं पृच्छामीति मन्वानो ब्रूते — **तथा तर्कयामीति** ।

---

१. 'न केन प्र' ग. पाठः.

(ततः प्रविशत्यहङ्कारो यथानिर्दिष्टः ।)

**अहङ्कारः** — अहो मूर्खबहुलं जगत् । तथाहि —

नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनं
तत्त्वज्ञानमहो न शालिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि महोदधेरधिगतं माहाव्रती नेक्षिता
सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते ॥३॥

(विलोक्य) एते तावदर्थावधारणविधुराः स्वाध्यायाध्ययनमात्रनिरता वेदविप्लावका एव । (पुनरन्यतो गत्वा) एते च भिक्षामात्रं गृहीतयतिव्रता मुण्डितमुण्डाः पण्डितम्मन्या वेदान्तशास्त्रं व्याकुलयन्ति । (विहस्य)

---

दम्भाहङ्कारयोरविनाभावाद् दम्भप्रवेशानन्तरमहङ्कारः प्रवर्तत इत्याह — **तत** इति ।

ज्वलन्निवेत्यादिना संगृहीतमहङ्कारस्वरूपं प्रपञ्चयति — **अहो मूर्खबहुलं जग**दिति ।

**गुरो**र्मतं प्राभाकरम् । कौमारिलं भट्टाचार्यप्रणीतम् । शालिकनाथस्य प्राभाकरशिष्यस्य वाचां तत्त्वं तात्पर्यप्रतिपाद्यम् । वाचस्पतेर्गिरामित्यनुषङ्गः । सूक्तं सुष्ठु भाषितं महोदधेः पूर्वकाण्डोपयोगिग्रन्थकर्तुः । माहाव्रती जरन्मीमांसा । अथवा भद्रदीपप्रतिष्ठादिप्रजापतिव्रतविशेषाणां समाहारो माहाव्रती । अथवा महाव्रतं नाम शैवागमभेदः । तत्रेरिता माहाव्रती । नेक्षिता । **सूक्ष्मा** मन्दा । नास्त्येवेत्यर्थः । वस्तुविचारणा परमार्थतत्त्वचिन्ता । नृपशुभिः नृशब्दवाच्यपशुभिः । स्वस्थैः कृतार्थमात्मानं मन्यमानैरित्यर्थः ॥ ३ ॥

एवं तावदहङ्कारगर्वितानां सज्जनावधीरणा पापिष्ठतमा भवतीति सामान्येन प्रदर्श्येदानीं प्रत्येकं शास्त्रैः सह सन्निन्दाप्रकारमेव दर्शयति — **एते ताव**दित्यादिना । वेदविप्लावका वेददूषकाः । भिक्षामात्रमिति । भिक्षार्थमिति यावत् । व्याकुलयन्ति । ईदृगस्यार्थ इति निर्णेतुमसमर्था व्यालोलयन्तीत्यर्थः ।

---

१. 'शयित' ख. पाठः. २. 'छाप्रभृतित्र', ३. 'सज्जननि' क. पाठः.

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥ ४ ॥

तदेतद्वाङ्मात्रश्रवणमपि गुरुतरदुरितोदयाय । पुनरन्यतो गत्वा) एते च शैवपाशुपतादयो दुरभ्यस्ताक्षपादमताः पशवः पाषण्डाः । अमीषां सम्भाषणादपि नरा नरकं यान्ति । तदेते दर्शनपथाद् दूरतः परिहरणीयाः । (पुनरन्यतो गत्वा) एते त्रिदण्डव्यपदेशजीविनो द्वैताद्वैतमार्गपरिभ्रष्टा एव । (पुनरन्यतो गत्वा) एते च—

गङ्गातीरतरङ्गशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः ।
पर्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजग्रह-
व्यग्राग्राङ्गुलयो हरन्ति धनिनां वित्तान्यहो दाम्भिकाः॥५॥

(अन्यतो गत्वा विलोक्य) अये! कस्यैतद् द्वारोपान्तनिखातातिप्रांशुवंशकाण्डताण्डवितधौतसितसूक्ष्माम्बरसहस्रमितस्ततो

---

प्रत्यक्षादिप्रमाणसिद्धार्थविरुद्धा[1]भिधानशीलाः निगमान्ता यदि शास्त्राणि, तर्हि शून्यं जगदिति वदद्भिः ताथागतैः किमनिष्टमनुष्ठीयते । विरोधस्योभयत्राविशेषादिति भावः ॥ ४ ॥

दुरभ्यासो दुष्टाभ्यासः । अक्षपादमतं नैयायिकं दर्शनम् । अप्रवीणतयाभ्य(सं ? स्तं) मन्याः दुर्ललिताः । **द्वैताद्वैतमार्गपरिभ्रष्टा** इति । भेदाभेदवादित्वान्नैकत्रापि स्थितिं लभन्त इत्यर्थः ।

**बृसी** विष्टरम् । करण्डः पुष्पपुटिका । पर्यायेण क्रमेण । ग्रथितं प्रोतम् । अक्षसूत्रं रुद्राक्षमाला । बीजग्रहव्यग्रता नाम सत्वरमग्राङ्गुलिप्रचालनम् ॥ ५ ॥

---

१. 'द्धातिवदन' क. पाठः.

विन्यस्तकृष्णाजिनदृषदुपलसमिच्चषालोलूखलमुसलमनवरतहुताज्यगन्धिधूमश्यामलितगगनमण्डलममरसरितो नातिदूरे विभात्याश्रममण्डलम् । नूनमिदं कस्यापि गृहमेधिनो गृहं भविष्यति । भवतु । युक्तमस्माकमतिपवित्रमेतद् द्वित्रदिवसनिवासस्थानम् । (प्रवेशं नाटयति) । (विलोक्य च) अये,

मृद्बिन्दुलाञ्छितललाटभुजोदरोरः-
कण्ठोष्ठपृष्ठचिबुकोरुकपोलजानुः ।
चूडाग्रकर्णकटिपाणिविराजमान-
दर्भाङ्कुरः स्फुरति मूर्त इवैष दम्भः ॥ ६ ॥

भवतूपसर्पाम्येनम् । (उपसृत्य) कल्याणं भवतु भवताम् ।

(दम्भो हुङ्कारेण वारयति ।)

(प्रविश्य वटुः)

**वटुः** — (ससंभ्रमम्) ब्रह्मन्! दूरत एव स्थीयताम् । यतः पादौ प्रक्षाल्य एतदाश्रमपदं प्रवेष्टव्यम् ।

**अहङ्कारः** — (सक्रोधम्) आः पाप! तुरुष्कदेशं प्राप्ताः स्मः । यत्र श्रोत्रियानतिथीनासनपाद्यादिभिरपि गृहिणो नोपतिष्ठन्ते ।

---

**मृद्बिन्दुरिति** । भागीरथीसरःपरिसरमृदुलमृत्स्नातिलकितललाटाद्युक्तस्थान इत्यर्थः । चूडाग्रं शिखा । दर्भाङ्कुरः कुशभारः । मूर्त इवेति । स्वयं दम्भ एवेत्यर्थः ॥ ६ ॥

मौनव्याजव्यग्रेणासहमानेनायं हुङ्कारः प्रयुक्त इत्यवगच्छन् वाचा वारयन् वटुराह — **ब्रह्मन्निति** ।

सार्वत्रिकत्वाद् दाम्भिकत्वस्यातिथ्यकृदग्रेसरत्वभङ्गभयाद्धस्तेनाह—

---

१. 'द्व' क. ग. पाठः २. 'ता' ग. पाठः.

**दम्भः** —(हस्तसंज्ञया समाश्वासयति ।)

**वटुः** —एवमाराध्यपादा आज्ञापयन्ति । दूरदेशादागतस्यार्यस्य कुलशीलादिकं न सम्यगस्माभिर्विदितम् ।

**अहङ्कारः** —आः कथमस्माकमपि कुलशीलादिकमिदानीं परीक्षितव्यम् । श्रूयतां —

गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥ ७ ॥

---

**हस्तसंज्ञयेति** ।

हस्तचालनाकूतमावेदयन्नाह वटुः— **एवमिति** ।

**कथमित्यादेरयं** भावः—भास्वद्भानुप्रभावत् प्रसिद्धप्रभावानामस्माकमपीत्यभिमानवतां भाव इति । ननु ज्ञातमेव जिज्ञासितं त्वया, भवतु तथापि वदामीत्यभिप्रायेणाह — श्रूयतामिति ।

राज्यमधिकृत्य परीक्ष्यमाणे तावन्मत्प्रभावस्योपमा नास्तीत्याह — **गौडमिति** । द्युमण्डलपरिमण्डनाखण्डमार्ताण्डमण्डलवदखण्डभूमण्डलपरिमण्डनं हि गौडमिति भावः । निरुपमेति दक्षिणाराढेति विवक्षिता । धाम गृहम् । किमु वक्तव्यं मत्प्रभावस्य माहात्म्यमिति दर्शयतुं कैमुतिकन्यायेन पित्राद्यौत्कृष्ट्यं दर्शयन्नाह — तत्रोत्तम इति । प्रज्ञा प्रकृष्टज्ञानसम्पत्तिः । शीलं सद्वृत्तम् । उक्तञ्च —

"अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानं च शीलमेतद् विदुर्बुधाः ॥"

इति । कर्तव्याकर्तव्यविषयविभागविज्ञानं विवेकः । धैर्यमविषादः । विनयो गुर्वादिषु च प्रश्रयः । आचारो नित्याद्यनुष्ठानम् । एतैर्जगति मत्तुल्यो नास्तीत्यर्थः ॥ ७ ॥

(दम्भो वटुं पश्यति)

**वटुः**—(ताम्रघटीं गृहीत्वा) ब्रह्मन्! पादशौचं विधीयताम् ।

**अहङ्कारः**—भवतु । कोऽत्र विरोधः । एवं क्रियते (तथा कृत्वोपसर्पति ।)

(दम्भः दन्तान् पीडयित्वा वटुं पश्यति ।)

**वटुः**—दूरे तावत् स्थीयताम् । वाताहृताः प्रस्वेदकणिकाः प्रसरन्ति ।

**अहङ्कारः**—अहो, अपूर्वमिदं ब्राह्मण्यम् ।

**वटुः**—ब्रह्मन्! एवमेतत् । तथाहि—

अस्पृष्टचरणा ह्यस्य चूडामणिमरीचिभिः ।
नीराजयन्ति भूपालाः पादपीठान्तभूतलम् ॥ ८ ॥

**अहङ्कारः**—(स्वगतम्) अये, दम्भग्राह्योऽयं देशः । (प्रकाशम्) भवतु । अस्मिन्नासने उपविशामि । (तथा कर्तुमिच्छति ।)

**वटुः**—मैवम् । नाराध्यपादानामन्यैरासनमाक्रम्यते ।

**अहङ्कारः**—आः पाप! अस्माभिरपि दक्षिणराढाप्रदेशप्रसिद्धविशुद्धिभिर्नाक्रमणीयमिदमासनम् । शृणु रे मूर्ख!

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां पुन-
र्व्यूढा काचन कन्यका खलु मया तेनास्मि ताताधिकः ।

---

तर्ह्ययं न बहिष्कार्य इत्याराध्यपादनिरीक्षिताभिप्राय इति मन्वानो वटुराह—**ब्रह्मन्! पादशौचमिति** ।

**दन्तान्** पीडयित्वा कटकटायितान् कृत्वा ।

**अपूर्वमिदं ब्राह्मण्यमिति** छलेनापहासः कृतः ।

**नीराजयन्ति** अभिद्योतयन्ति ॥ ८ ॥

**स्यालको** भार्यासहोदरः । तस्य स्वस्रीयस्य दयिता मिथ्याभि शस्त

अस्मत्स्यालकभागिनेयदयिता मिथ्याभिशस्ता तत-
स्तत्सम्पर्कवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥९॥

**दम्भः**—ब्रह्मन्! यद्यप्येवं, तथाप्यविदितास्मद्वृत्तान्तो भवान्। तथाहि—

सदनमुपगतोऽहं पूर्वमम्भोजयोनेः
सपदि मुनिभिरुच्चैरासनेषूज्झितेषु।
सशपथमनुनीय ब्रह्मणा गोमयाम्भः-
परिमृजितनिजोरावाशु संवेशितोऽस्मि॥ १०॥

**अहङ्कारः**—(स्वगतम्) अहो, दाम्भिकस्य ब्राह्मणस्यात्युक्तिः। (विचिन्त्य) अथवा दम्भस्यैव। भवत्वेवं तावत्। (प्रकाशम्) आः किमेवं गर्वायसे। (सक्रोधम्।)

अरे क इव वासवः कथय को नु पद्मोद्भवो
वद प्रभवभूमयो जगति का ऋषीणामपि।

---

विद्यमानं (?) न भवतीत्यर्थः। तस्यां प्रणयाभावादिति न शङ्कनीयमित्याह—प्रेयस्यपीति। तत्सम्बन्धनिमित्तप्रत्यवायभयादेव केवलमिति भावः। प्रोज्झिता प्रकर्षेण उज्झिता॥ ९॥

सशपथमिति। इतःपूर्वमयमन्यैर्नाक्रान्त इत्येवंप्रत्ययेन सह सकृदासितुं योग्यामिति याच्ञापूर्वमुपवेशित इत्यर्थः॥ १०॥

नास्माकं जननीत्यत्र मातृवंशाद् वैशारद्यमभाणि, तद्दम्भेन तथा स्वीकृतं प्रायेणेत्याशङ्क्य इन्द्रादिनिन्दयात्मानमतिशाययति—(अरे) क इवेत्यादिना। अहल्याभिगमनाद् बालिशः सोऽपीत्यर्थः। को न्विति। दुहितृगमनादिना सोऽपि तथाविध इत्यर्थः। प्रभवभूमय उत्पत्तिस्थानानि ऋषीणां व्यासादीनां योजनगन्ध्यादय एवेत्यर्थः। तव वा पुनः कोऽतिशय इति

---

१. 'शवै' ख. ग. पाठः,

अवेहि तपसो बलं मम पुरन्दराणां शतं
शतं च परमेष्ठिनां पततु वा मुनीनां शतम् ॥ ११ ॥

**दम्भः**— (विलोक्य सानन्दम् ।) अये! आर्यः पितामहोऽस्माकमहङ्कारः । आर्य! दम्भो लोभात्मजोऽभिवादये ।

**अहङ्कारः**—वत्स! आयुष्मान् भव । बालः खल्वसि, मया द्वापरान्ते दृष्टः। सम्प्रति चिरकालविप्रकर्षाद् वार्धक्यग्रस्ततया च न सम्यक् प्रत्यभिजानामि । अथ त्वत्कुमारस्यानृतस्य कुशलम् ।

**दम्भः**—अथ किम् । सोऽप्यत्रैव महामोहस्याज्ञया वर्तते । नहि तेन विना मुहूर्तमप्यहं प्रभवामि ।

**अहङ्कारः**— अथ तव मातापितरौ तृष्णालोभावपि कुशलौ ।

**दम्भः**— तावपि राज्ञो महामोहस्याज्ञयात्रैव वर्तेते । तौ विना क्षणमपि न तिष्ठामि । आर्यमिश्रैः पुनः केन प्रयोजनेनात्र प्रसादः कृतः ।

---

तत्राह— अवेहीति । अयमर्थः— सम्प्रति पुरन्दरादिभिरिहागन्तव्यमिति चेन्मम मनीषा जागर्ति, तर्हि सत्वरमेव त्रिदिवादिहागच्छन्तीति ॥ ११ ॥

द्वापरान्तः कलियुग इत्यर्थः । (चिरकालविप्रकर्षात्) कृतयुगादिकालविप्रकर्षात् (?) । अनृतस्य मिथ्याभाषिणः ।

**नहि तेन विनेति** । अयमर्थः— अविद्यमानस्य विद्यमानवत्प्रकटीकारो हि दम्भः । स चानृताविनाभूत इति साहचर्यमिति ।

**तृष्णा** कदाचिदप्यनलम्बुद्धिः । लोभः सर्वतः समादित्सा, स्वद्रव्यत्यागासहिष्णुता वा ।

सात्त्विकाहङ्कारशङ्कया पृच्छति— **आर्यमिश्रैः पुनरित्यादिना** ।

**अहङ्कारः** — वत्स! मया महामोहस्य विवेकसकाशादत्याहितं श्रुतम्। तेन तद्वृत्तान्तं प्रत्येतुमागतोऽस्मि।

**दम्भः** — तर्हि स्वागतमेवार्यस्य। यतो महाराजस्यापीन्द्रलोकादत्रागमनं श्रूयते। अस्ति च किंवदन्ती यद्देवेन वाराणसी राजधानी वस्तुं निरूपितेति।

**अहङ्कारः** — किं पुनर्वाराणस्यां सर्वात्मना मोहस्यावस्थानकारणमिति।

**दम्भः** — आर्य! ननु विवेकोपरोध एव। तथाहि —

विद्याप्रबोधोदयजन्मभूमि-
वाराणसी ब्रह्मपुरी दुरत्यया।
असौ कुलोच्छेदविधिं चिकित्सु-
र्निर्वस्तुमत्रेच्छति नित्यमेव॥ १२॥

---

अत्याहितमतिक्रमं, भयस्थानमिति यावत्।

सोऽयमस्मदनुकूल एवाहङ्कार इति मन्वान आह — तर्हीति। स्वागतमित्युक्तं, तत्र हेतुमाह — यत इति। इन्द्रलोकस्य भोगभूमित्वात् तत्र विशेषेण मोहबाहुल्यं, न तत्र विवेकावकाश इत्यर्थः। किमिति तर्हि इहागमनमिति, तत्राह — यद्देवेनेति।

विवेकादुपरोधः उपद्रवः। अथवा विवेकमुपरोद्धुम्। उपरोधमेव दर्शयति — तथाहीति।

विद्या वेदान्तविज्ञानम्। उक्तञ्च —

"ज्ञानं वेदान्तविज्ञानमज्ञानमितरन्मुने।।"

इति। प्रबोधः स्वापरोक्ष्यम्। तयोरुदयो व्यक्तिस्तस्या जन्मभूमिरुत्पत्तिस्थानम्। ब्रह्मणोऽभिव्यञ्जकत्वाद् ब्रह्मपुरी। दुःखेनात्ययोऽतिक्रमणं यस्याः सा तथा। निरत्ययेति वा पाठान्तरम्। निरपायेत्यर्थः। यस्मादेवं वाराणस्यतोऽत्रास्मत्कुलस्योच्छेदनस्य विधिर्निष्पादनं, तं[1] चिकित्सुः[2] प्रतिकर्तुमेच्छन् इहैव वस्तुमिच्छत्यसौ महामोह इत्यर्थः॥ १२॥

---

१ 'तं' घ. पाठः २ 'चिकीर्षुः प्र' ख ग 'विधित्सु' घ पाठः

**अहङ्कारः**—(सभयम्) यद्येवमशक्यप्रतीकार एवायमर्थः। यतः—

परममविदुषां पदं नराणां
पुरविजयी करुणाविधेयचेताः।
कथयति भगवानिहान्तकाले
भवभयकातरतारकं प्रबोधम् ॥ १३ ॥

**दम्भः**—सत्यमेतत्। तथापि नैतत् कामक्रोधाभिभूतानां सम्भाव्यते। तथाह्युदाहरन्ति तैर्थिकाः—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १४ ॥

**पुरविजयी** त्रिपुरहन्ता। किन्तु सोऽपि स्वतन्त्रो न भवतीत्याह—करुणेति। भवसागरपरिभ्रमणपरिखेदपरिदूयमानप्राणि[1]निवहानिरीक्षणसञ्जातबहलतरकरुणा[2]विधेयं प्रवर्तनीयं चेतो यस्य स तथा। अतस्तया प्रेरितः कथयत्युपदिशति। प्रबोधं प्रत्यग्ब्रह्मणोरेकत्वविज्ञानम्। तं विशिनष्टि—भवेति। भवः संसारः स एव दुःखरूपत्वाद् भयं तेन कातरता विषादः तं तारयतीति तथोक्तम्। नराणामित्युपलक्षणम्। सर्वेषामप्यविमुक्तक्षेत्रवर्तिनामनन्यशरणानां कथयत्येव[3] भगवान् भवानीपतिरन्तकाल इत्यर्थः ॥ १३ ॥

एवमपि न भेतव्यमित्याह—**सत्यमिति**। हस्तादिसंयतिरनिष्टाकरणम्। विद्या शास्त्रार्थज्ञानम्। तपो विहितानुष्ठानम्। कीर्तिः पुण्यनिमित्ता ख्यातिः। तीर्थफलं पुण्यफलम् ॥ १४ ॥

१. 'णिनिरी' ग. पाठः. २. 'णया प्र' क. ख. पाठः. ३. 'व करुणामूर्तिरन्त' क. पाठः.

(नेपथ्ये)

भो भोः पौराः! एष खलु सम्प्राप्तो देवो महामोहः। तेन,

निष्यन्दैश्चन्दनानां स्फटिकमणिशिलावेदिकाः संस्क्रियन्तां
मुच्यन्तां यन्त्रमार्गाः प्रचरतु परितो वारिधारा गृहेषु।
उच्छ्रीयन्तां समन्तात् स्फुरदुरुमणयः श्रेणयस्तोरणानां
धूयन्तां सौधमूर्धस्वमरपतिधनुर्धामचित्राः पताकाः ॥ १५ ॥

**दम्भः**—आर्य! प्रत्यासन्नोऽयं महाराजः। तत्प्रत्युद्गमनेन सम्भाव्यतामार्येण।

**अहङ्कारः**— एवं भवतु। (निष्क्रान्तौ।)

(विष्कम्भकः)

(ततः प्रविशति महामोहो विभवतश्च परिवारः।)

**महामोहः**— (विहस्य) अहो, निरङ्कुशा जडधियः।

आत्मास्ति देहाद् व्यतिरिक्तमूर्ति-
भोक्ता स लोकान्तरितः फलानाम्।
आशेयमाकाशतरोः प्रसूनात्
प्रथीयसः स्वादुफलप्रसूतौ ॥ १६ ॥

---

**यन्त्रमार्गाः** सलिलनिष्यन्दप्रणाल्यः ॥ १५ ॥

**विभवतः** करिनरतुरगादिविभवैः कामक्रोधपरिवारैश्च परिवृत इत्यर्थः।

**निरङ्कुशाः** अविविच्यनिश्चितार्था इत्यर्थः।

तदेव दर्शयति — **आत्मास्तीति**। आत्मा नाम देहाद् व्यतिरिक्तः कश्चिदस्ति। स चास्मिन् शरीरे कर्माणि कृत्वा लोकान्तरं प्राप्य देहान्तरेणेहकृतस्याशुतरविनाशिनः कर्मणः फलं भोक्तेत्येतन्मनोरथमात्रम्, अस्मत्प्रत्यक्षगम्यं न भवतीत्यर्थः। प्रत्यक्षायोग्यस्य वस्तुनोऽनुपपत्तावुदाहरणमाह — **आशेति** ॥ १६ ॥

इदं च, स्वकल्पनाविनिर्मितपदार्थावष्टम्भेन जगदेव दुर्विदग्धैर्वञ्च्यते । तथाहि —

यन्नास्त्येव तदस्ति वस्त्विति मृषा जल्पद्भिरेवास्तिकै-
वाचालैर्बहुभिस्तु सत्यवचसो निन्द्याः कृता नास्तिकाः ।
हंहो पश्यत तत्त्वतो यदि पुनश्छिन्नादितो वर्ष्मणो
दृष्टः किं परिणामरूषितचितेर्जीवः पृथक् तैरपि ॥ १७ ॥

अपिच्च न केवलं जगत्, आत्मैव तावदमीभिर्वञ्च्यते । तथाहि —

तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो
योषेयं वसु वा परस्य तदमुं भेदं न विद्मो वयम् ।

---

इदं च । अपरं मौढ्यमिति शेषः । तदेव दर्शयति — तथाहीति ।

यद् देहादिव्यतिरिक्तात्मवस्तु कालत्रयेऽपि न दरीदृश्यते, तद् वस्तु अस्तीति जल्पन्तः प्रलापिनः आस्तिकाः अप्रामाणिकार्थभाषिणोऽपि बहुमता इत्यर्थः । वयं तु सर्वसम्प्रतिपन्नप्रत्यक्षादिसिद्धयथाभूतार्थवादिनोऽपि गर्ह्याः वाचालैर्बहुभाषिभिः । हंहो अहो आश्चर्यमित्यर्थः । ननु शास्त्रार्थभाषित्वात् तेषां न केवलं वाचालतेति चेत् तत्राह — तत्त्वत इति । परमार्थतः खण्डिताद् देहात् । तमेव विशिनष्टि — परिणामेति । परिणामेन भूतानां संयोगविशेषेण रूषिता वासिता चितिः चैतन्यं यस्मिन् शरीरे तत् तथा । तस्मात् पृथगिति । अयं भावः — अहमात्मेति सामानाधिकरण्यदर्शनाद् देहस्य ममप्रत्ययस्य त्वौपचारिकत्वान्मृतशरीरे च विकसितचैतन्याभावेनाप्रसङ्गात् ताम्बूलपूगकर्पूरादीनां योग्यपरिणामसंयोगाभिव्यक्तमदशक्तिवत् पृथिव्यप्तेजोवायुलक्षणभूतचतुष्टयपरिणामवासितचितिर्देह एवात्मा । ननु तद्व्यतिरेकेण पादादिकेशान्तं तिलशः शकलीकृत्य विलोक्यमानेऽस्मदिन्द्रियगम्यं वस्त्वस्तीति ॥ १७ ॥

आत्मवञ्चनमेव दर्शयति — तुल्यत्व इति । वाशब्दान्न केवलमवयवसाम्यमेव, सम्भोगाद्यपि समानमित्यर्थः । कार्यं कर्तव्यम् अकार्यमकर्तव्य-

हिंसायामथवा यथेष्टगमने स्त्रीणां परस्वग्रहे
कार्याकार्यकथां तथापि यदमी निष्पौरुषाः कुर्वते॥१८॥

(विचिन्त्य सश्लाघम्) सर्वथा लोकायतमेव शास्त्रम् । यत्र प्रत्यक्षमेव प्रमाणं, पृथिव्यप्तेजोवायवस्तत्त्वानि, अर्थकामौ पुरुषार्थौ, भूतान्येव चेतयन्ते, नास्ति परलोकः, मृत्युरेवापवर्गः । तदेतदस्मदभिप्रायानुबन्धिना वाचस्पतिना प्रणीय चार्वाकाय समर्पितम् । तेन च शिष्योपशिष्यद्वारेणास्मिँल्लोके बहुलीकृतं तन्त्रम् ।

(ततः प्रविशति चार्वाकः शिष्यश्च ।)

**चार्वाकः**—वत्स! जानासि दण्डनीतिरेव विद्या । अत्रैव वार्तान्तर्भवति । धूर्तप्रलापस्त्रयी । स्वर्गोत्पादकत्वेन विशेषाभावात् ।

---

मिति कथां कुर्वते । विधिप्रतिषेधविभागं कल्पयन्तीत्यर्थः । तत्र हेतुमाह—निष्पौरुषा इति[1] । पुरुषस्य भावः पौरुषमपराधीनत्वं तद्रहिता निष्पौरुषाः । निर्वीर्या इति यावत् ॥ १८ ॥

**सर्वथेति** । इतरशास्त्राणां नैरर्थक्यमित्यर्थः । भूतान्येवत्येवकारेण भूतपरिणामप्रकाशितचिद्व्यतिरेकेणान्यश्चेतनो व्यावर्त्यते । अधुना लोकायततन्त्रस्य सम्प्रदायसिद्धतामाह—तदेतदिति । वाचस्पतिना बृहस्पतिना ।

एवं तावद् राज्ञि महामोहे लोभादिभिः सह कथां कथयति सति चार्वाकः समागत इत्याह—**तत** इति ।

**दण्डनीतिः** अर्थोपार्जनोपायप्रक्रिया । वार्ता कृष्यादिलक्षणा जीविका । नन्वन्यापि वेदलक्षणा विद्या विद्यत इत्याशङ्क्याह—**धूर्तप्रलाप इति** ।

"त्रयो वेदस्य कर्तारो मुनिभण्डनिशाचराः ।"

इति वचनाद् धूर्तानां स्वार्थपराणां सञ्जल्पितं वेदो नतु प्रामा-

---

१. 'ति । अन्याधीनाः निर्वी' क. ख. पाठः.

पश्य —

स्वर्गः कर्तृक्रियाद्रव्यविनाशे यदि यज्वनाम् ।
ततो दावाग्निदग्धानां फलं स्याद् भूरि भूरुहाम् ॥ १९ ॥

अपिच ।

मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम् ॥ २० ॥

शिष्यः — (क) आचाळिअ! जइ एसो एव्व पुळुअत्थो जं खज्जए पिज्जए अ, ता किंत्ति एदेहिं तित्थिएहिं संसाळसोक्खं पळिहळिअ अप्पा घोळघोळेहिं पळाअ-सांतवण-सट्ठकाळासणप्पहुदिहिं दुःखेहिं खविज्जदि ।

(क) आचार्य! यद्येष एव पुरुषार्थो यत् खाद्यते पीयते च, तत् किमित्येतैस्तीर्थिकैः संसारसौख्यं परिहृत्यात्मा घोरघोरैः पराक-सान्तपन-षष्ठकालाशन-प्रभृतिभिर्दुःखैः क्षप्यते ।

णिक इत्यर्थः । तदेव द्रढयति — पश्येति ।

दग्धानां भसितभावं भजतां भूरुहां वृक्षाणां तावत् फलं नोपलभ्यते । दृष्टानुसारेणादृष्टकल्पना प्रभवति यस्मात्, अतः 'स्वर्गकामो यजेते'ति वाक्यं यागकर्तव्यताव्याजेन दक्षिणादिद्वारा धनग्रहणाय गीतमिति भावः ॥ १९ ॥

तत्रापि युक्त्यन्तरमाह — अपिचेत्यादिना । निर्वाणस्य विनष्टस्य ॥ २० ॥

शिष्यः । आचार्य! यद्येष एव पुरुषार्थो यत् खाद्यते पीयते च, तत् किमित्येतैस्तीर्थिकैः संसारसौख्यं परिहृत्यात्मा घोरघोरैः पराकसान्तपन-षष्ठकालाशनप्रभृतिभिर्दुःखैः क्षप्यते । तीर्थिकैः शास्त्रकारैः । पराको मासोप-

१. 'द्गात भाव:।' क. ख. पाठः.

चार्वाकः — धूर्तप्रणीतागमप्रतारितानां मूर्खाणामाशा-मोदकैरेवेयं तृप्तिः । पश्य पश्य —

क्वालिङ्गनं भुजनिपीडितबाहुमूल-
भग्नोन्नतस्तनमनोहरमायताक्ष्याः ।
भिक्षोपवासनियमार्कमरीचिदाहै-
र्देहोपशोषणविधिः कुधियां क्व चैषः ॥ २१ ॥

शिष्यः — (क) आचालिअ! एव्वं खु तित्थिआ आल-वन्ति — दुःखमिस्सिदं संसाळसोक्खं पळिहळणिज्जं त्ति ।

चार्वाकः — (विहस्य) आः, दुर्बुद्धिविलसितमिदं नर-पशूनाम् ।

त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।

(क) आचार्य! एवं खलु तीर्थिका आलपन्ति — दुःखमिश्रितं संसार-सौख्यं परिहरणीयमिति ।

वासः । सान्तपनं नाम सप्तरात्रोपलक्षणकृच्छ्रविशेषः । तार्तीयेऽह्नि नक्त-भुक्तिः षष्ठकालाशनम् । प्रभृतिशब्देन कृच्छ्रादयो गृह्यन्ते ।

प्रतारितानां वञ्चितानाम् । मूर्खाणां स्वप्रयोजनानभिज्ञानाम् ।

क्वालिङ्गनं क्व वा भिक्षोपवासादयः इत्यजगजान्तरमित्यर्थः ॥

आचार्य! एवं खलु तीर्थिका आलपन्ति — दुःखमिश्रितं संसार-सौख्यं परिहरणीयमिति । शास्त्रविद्भिरभिहितत्वात् तदपि श्रद्धेयमेव नन्वि-त्याशयः ।

स्वपरप्रयोजनानभिज्ञाः पशवः ।

पशुत्वमेव दर्शयति — त्याज्यमित्यादि । मूर्खाणां पशूनां वि-चारणा चिन्ता, निरूपणेति यावत् ॥ २२ ॥

१. 'रवमभि' घ. पाठः.

व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥ २२ ॥

महामोहः — अये चिरेण खलु प्रमाणवन्ति वचनानि कर्णसुखमुपजनयन्ति । (विलोक्य सानन्दम्) हन्त प्रियसुहृन्मे चार्वाकः ।

चार्वाकः—(विलोक्य) एष महाराजमहामोहः । उपसर्पामि । (उपसृत्य) जयतु जयतु महाराजः । एष चार्वाकः प्रणमति ।

महामोहः — चार्वाक ! स्वागतं ते । इहोपविश्यताम् ।

चार्वाकः—(उपविश्य) देव ! कलेरसावष्टाङ्गपातः प्रणामः ।

महामोहः — अथ कलेर्भद्रमव्याहतम् ।

चार्वाकः — देवप्रसादेन कलेर्भद्रम् । निर्वर्तितकर्तव्यशेषश्च देवपादमूलं द्रष्टुमिच्छति । यतः —

आज्ञामवाप्य महतीं द्विषतां निखाता-
न्निर्वत्य तां सपदि लब्धमुखप्रसादः ।
उच्चैःप्रमोदमनुमोदितदर्शनः सन्
धन्यो नमस्यति पदाम्बुरुहं प्रभूणाम् ॥ २३ ॥

---

एवं चार्वाकभाषितजनितसन्तोषः स्वगतमेवाह महामोहः — अये इति ।

अष्टाङ्गं नाम —

"पद्भ्यामथ च जानुभ्यां बाहुभ्यामुरसा दृशा ।
मनसा वचसा चैव शिरसाष्टाङ्गमीरितम् ॥"

इति ।

तर्हि किमिति सत्वरमिह नायातीति चेत् तत्राह — निर्वर्तितकर्तव्यशेषश्चेति ।

लब्धमुखप्रसादः प्राप्तस्वामिसत्कारः । उच्चैःप्रमोदं यथा

महामोहः— अथ तत्र कियत् सम्पन्नम् ।

चार्वाकः— देव !

व्यतीतवेदार्थपथः प्रथीयसीं
यथेष्टचेष्टां गमितो महाजनः ।
तदत्र हेतुर्न कलिर्न चाप्यहं
प्रभुप्रसादो हि तनोति पौरुषम् ॥ २४ ॥

तत्रौत्तराः पथिकाः पाश्चात्याश्च त्रयीमेव त्याजिताः । शमदमादीनां कैव कथा । अन्यत्रापि प्रायशो जीविकामात्रफलैव त्रयी । यथाहाचार्यः—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ २५ ॥

---

भवति तथा अनुमोदितं सम्पादितं दर्शनं यस्य स तथा । परिपालितस्वामिशासनः खलु धन्यो धनार्ह इत्यर्थः ॥ २३ ॥

व्यतीतो व्यतिक्रान्तो वेदार्थयोः पन्थाः, वेदस्याध्ययनप्रवचनादिर्मार्गः अर्थस्य तु तत्त्वालोचनरूपः, स परित्यक्तो येन महाजनेन स तथा । कथमेतदप्रयत्नेन साधितमिति चेत् तत्राह— प्रभुप्रसाद इति । प्राप्तस्वामिप्रसादेन न किमपि दुष्करमित्यर्थः ॥ २४ ॥

औत्तराः पथिकाः काश्मीरादिदेशजाः बर्बरादयः । पाश्चात्याश्च सिन्ध्वादिदेशजाः तुरुष्कादयः । त्रयीमेवेत्येवकारेण न केवलं वेदपरित्याग एव पाषण्डागमस्वीकारश्चेति दर्शयति ।

(बुद्धिपौरुषहीनानां) बुद्धिहीनानां पौरुषहीनानां च । बुद्धिहीनता नाम परस्वापहरणाद्यवनयज्ञता । पौरुषहीनता तु बाहुबलाभावः ॥ २५ ॥

---

१. 'र; कृतमे' ख. घ. पाठः.

तेन कुरुक्षेत्रादिषु तीर्थेषु तावद् देवेन स्वप्नेऽपि विद्याप्रबोधोदयो नाशङ्कनीयः ।

**महामोहः**— साधु सम्पादितम् । महत् खलु तत् तीर्थं व्यर्थीकृतम् ।

**चार्वाकः**— देव! अन्यच्च विज्ञाप्यमस्ति ।

**महामोहः**— किं तत् ।

**चार्वाकः**—अस्ति विष्णुभक्तिर्नाम महाप्रभावा योगिनी । सा तु कलिना यद्यपि विरलप्रचारा कृता, तथापि तदनुगृहीतान् वयमालोकयितुमपि न प्रभवामः । तदत्र देवेनावधातव्यमिति ।

**महामोहः**— (सभयमात्मगतम्) आः प्रसिद्धमहाप्रभावा सा योगिनी ! स्वभावाद् विद्वेषिणी चास्माकं दुरुच्छेद्या सा । (प्रकाशम्) भद्र! अलमनया शङ्कया । कामक्रोधादिषु प्रतिपक्षेषु कुतोऽयमुदेष्यति । तथापि लघीयस्यपि रिपौ नानवहितेन जिगीषुणा भवितव्यम् । यतः—

---

स्वप्नेऽपीति । तेषु तमसो निबिडभावादित्यर्थः ।

तीर्थं वेदसिद्धान्तः ।

नैतावता सन्तोषः कार्य इत्याह — अन्यदिति ।

विरलप्रचारा क्वाचित्कप्रचारा । नन्वविद्यमानकल्पा तर्हि सा, तया का क्षतिरस्माकमिति तत्राह — तदनुगृहीतानिति ।

तर्ह्यशक्यप्रतीकारा सेत्याह — सभयमिति । आत्मनैव प्रश्वासयति — अलमिति । तथापि —

"उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥"

विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुन्तुदः ।
उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ २६ ॥

(नेपथ्याभिमुखमवलोक्य) कोऽत्र भोः ! ।

(प्रविश्य दौवारिकः ।)

**दौवारिकः**—जयतु जयतु । आज्ञापयतु देवः ।

**महामोहः**—भो ! असत्सङ्ग ! । आदिश्यन्तां कामक्रोधलोभमदमात्सर्यादयो यथा योगिनी विष्णुभक्तिर्भवद्भिरेवावहितैर्निहन्तव्येति ।

**दौवारिकः**—यदाज्ञापयति देवः ।

(इति निष्क्रान्तः ।)

(ततः प्रविशति पत्रहस्तः पुरुषः ।)

**पुरुषः**—(क) अहक्के उक्कळदेसादो आअदोह्मि । तत्थ साअळतीळसण्णिवेसे पुळिसोत्तमसण्णिगदं देवदाअदणम् । तस्सिं[१]

(क) अहमुत्कलदेशादागतोऽस्मि । तत्र सागरतीरसन्निवेशे पुरुषोत्तम-

इति न्यायात् दृढतरपृष्ठबलः शङ्कितव्य एव रिपुरित्याह—तथापीति ।
अरुर्नाम क्षतं तत् तुदतीत्यरुन्तुदो मर्मस्पृगिति यावत् ॥ २६ ॥

अधुना सर्वस्यैतस्य दुर्व्यसनस्य मूलं विष्णुभक्तिरिति मन्वानस्तदनुवधे यतनीयमिति निश्चित्याह—कोऽत्रेति ।

एवं तावन्महामोहसमाज्ञया विशिष्टदेशक्षेत्राश्रमादिषु विष्णुभक्तिप्रतिचिकीर्षया लोभादयो व्यवस्थिता इत्यभ्यधायि । अधुना तद्वृत्तान्तो निवेद्यते—तत इति । पत्रहस्तो वार्त्ताहरः ।

अहमुत्कलदेशादागतोऽस्मि । तत्र सागरतीरसन्निवेशे पुरुषोत्तम-

१. 'दः क्षतं तु' घ. पाठः. २. 'स्सिं वट्टमाणेहिं म' ख. पाठः.

मदमाणेहिं भट्टकेहिं मह्णाळाअसआसं पेसिदोम्हि । (विलोक्य) एसा वाळाणसी । एदं ळाअउळम् । जाव्पाविसामि । (प्रविश्य) एसो भट्टको चव्वाकेण शत्थं किंवि मन्तअन्तो चिट्ठदि । भोदु उवसप्पामि णम् । (उपसृत्य) जेदु जेदु भट्टको एदं पत्तं णिळूपञ्जदु भट्टको । (इति पत्रमर्पयति ।)

**महामोहः** —(पत्रं गृहीत्वा) कुतो भवान् ।

**पुरुषः** —(क) भट्टक! पुळिसोत्तमादो ।

**महामोहः** —(स्वगतम्) कार्यमत्याहितं भविष्यति । (प्रकाशम्) चार्वाक! गच्छ । कर्तव्येष्ववहितेन भवता भवितव्यम् ।

**चार्वाकः** —यदाज्ञापयति देवः ।

(इति निष्क्रान्तः ।)

---

शब्दितं देवतायतनम् । तस्मिन् मदमानाभ्यां भट्टारकाभ्यां महाराजसकाशं प्रेषितोऽस्मि । एषा वाराणसी । एतद् राजकुलम् । यावत् प्रविशामि । एष भट्टारकश्चार्वाकेण सार्धं किमपि मन्त्रयंस्तिष्ठति । भवतूपसर्पाम्येनम् । जयतु जयतु भट्टारकः । इदं पत्रं निरूपयतु भट्टारकः ।

(क) भट्टारक! पुरुषोत्तमात् ।

---

शब्दितं देवतायतनम् । तस्मिन् मदमानाभ्यां भट्टारकाभ्यां महाराजसकाशं प्रेषितोऽस्मि । एषा वाराणसी । एतद् राजकुलम् । यावत् प्रविशामि । एष भट्टारकश्चार्वाकेण सार्धं किमपि मन्त्रयंस्तिष्ठति भवतूपसर्पाम्येनम् । जयतु जयतु भट्टारकः । एतत् पत्रं निरूपयतु भट्टारकः । उत्कलदेशो नाम ओड्रदेशः ।

भट्टारक! पुरुषोत्तमात् ।

**स्वगतमिति** । एकान्त एवागतं तिरोहितं पत्रमालक्ष्य कार्यं प्रयोजनम् अत्याहितमतिवृत्तमित्यात्मनैव न्यरूपयदित्यर्थः ।

**महामोहः**— (पत्रं वाचयति ।)

'स्वस्ति श्रीवाराणस्यां महाराजाधिराजपरमेश्वरमहामोहपादान् पुरुषोत्तमायतनाद् मदमानौ साष्टाङ्गपातं प्रणम्य विज्ञापयतः । यथा भद्रमव्याहतम् । अन्यच्च देवी शान्तिर्मात्रा श्रद्धया सह विवेकस्य दौत्यमापन्ना विवेकसङ्गमाय देवीमुपनिषदमहर्निशं प्रतिबोधयति । अपिच कामसहचरोऽपि धर्मो वैराग्यादिभिरुपजप्त इव लक्ष्यते । यतः कामाद् विभिद्य कुतश्चिन्निगूढः प्रचरति । तदेतज्ज्ञात्वा तत्र देवः प्रमाणमिति ।

**महामोहः**— (सक्रोधम्) आः किमेवमतिमुग्धौ[1] शान्तेरपि

---

अव्याहतमक्षतं सर्वम् । किन्तु शान्त्यादयः प्रतिपक्षा न कार्त्स्न्येन परावृत्ता इत्याह — देवीति । प्रतिबोधयति प्रतिपादयति । ननु काम्यप्रतिषिद्धपरिहारेणानुष्ठितनित्यनैमित्तिकैः खल्ववदाताशयानां शान्त्यादिसम्भावना, काम्यव्यतिरेकेण च कर्मणोऽनुपलम्भात् कुतः शान्तेरवकाश इत्याशङ्क्याह — अपिचेति । वैराग्यं नाम दृष्टानुश्रविकसुखतत्साधनेषु क्षयिष्णुत्वादिदोषनिरीक्षणेन वैतृष्ण्यम् । आदिशब्देन शमादयो गृह्यन्ते । उपजप्त इव अन्तर्भेदित इव । काम्यव्यतिरेकेणाप्यस्ति धर्म इत्यर्थः । क्वचिन्निगूढ इति ।

"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ।"

इत्यादिवचनादप्रकटितं महात्मभिः क्रियत इत्यर्थः । तर्हि कः प्रतीकार इत्यत्राह — देव इति । देवेनैवैतद् ज्ञातुं शक्यत इत्यर्थः ।

किमेवमिति । मदो मानश्च स्वप्रभावमविदित्वा किमिति चपलाया बालायाः शान्तेः साध्वसं गता इत्यर्थः । सत्यं बाला शान्तिस्तथापि

---

१. 'गभायाः शा' ख. पाठः. २. 'म्यव.प्र' ग. पाठः. ३. 'णवै' ख. पाठः. ४. 'क्वचन निगू' ख. ग. घ. पाठः.

[1]बिभीतः । कामादिषु प्रतिपक्षेषु कुतोऽस्याः[2] सम्भवः । तथाहि —

धाता विश्वविसृष्टिमात्रनिरतो देवोऽपि गौरीभुजा-
श्लेषानन्दविघूर्णमाननयनो दक्षाध्वरध्वंसनः[3] ।
दैत्यारिः कमलाकपोलमकरीरेखाङ्कितोरःस्थलः
शेतेऽब्धावितरेषु जन्तुषु पुनः का नाम शान्तेः [कथा ॥ २७ ॥

(पुरुषं प्रति) जाल्म! गच्छ[4] । कामं[5] सत्वरमुपेत्या[6]देशमस्माकं प्रतिपादय । यथा — दुराशयो धर्म इत्य[7]स्माभिरवगतम् । तदस्मिन् मुहूर्तमपि न विश्वसितव्यम् । दृढं बद्ध्वा धारयितव्य इति ।

**पुरुषः** — (क) जं देवो आणवेदि ।

(इति निष्क्रान्तः ।)

---

(क) यद् देव आज्ञापयति ।

---

सा जीवति चेत् अस्मत्कुलोच्छेद इत्याशङ्कयाह — कुतोऽस्या इत्यादिना ।

विघूर्णमाननयनः कामोद्रेककलुषितकटाक्षः । मकरी रेखा कस्तूरिकादिगन्धद्रव्यकल्पितपत्रलेखा । तया अङ्कितं चिह्नितमुरःस्थलं यस्य स तथोक्तः । एवं प्रसिद्धप्रभावानां हिरण्यगर्भादीनामपि कामक्रोधादय एव प्रगल्भन्ते । किमु वक्तव्यमर्वाचीनेष्वित्याशयः ॥ २७ ॥

**जाल्मो**ऽसमीक्ष्यकारी । प्रतिपादय प्रतिबोधय । दुराशयो धर्म इति । अयमाशयः—सकृदपि साद्गुण्येन सम्पादितो धर्मः कल्पकोटिव्यवस्थितोऽप्यपवर्गान्वेषी । तस्मात् स कारागृहे दृढं बद्ध्वा धारयितव्य इति ।

**पुरुषः** । यद्देव आज्ञापयति ।

---

१. 'तौ बिभीतः । कु', २. 'स्या वा स', ३. 'कः ।', ४. 'च्छ त्वं । का', ५. 'मस्म', ६. 'स्माकमादेशं प्र', ७. 'ति ज्ञातमस्माभिः । तादिनानु' ख. पाठः.

**महामोहः**—(विचिन्त्य) शान्तेः[1] कोऽभ्युपायः। अथवा अलमुपायान्तरेण। क्रोधलोभावेव[2] तावदत्र पर्याप्तौ। कः कोऽत्र भोः।

(प्रविश्य)

**दौवारिकः**—आज्ञापयतु देवः।

**महामोहः**—आहूयतां क्रोधो लोभश्च।

**दौवारिकः**—यदाज्ञापयाति देवः।

(इति निष्क्रान्तः।)

**दौवारिकः**—यदाज्ञापयति देवः।

**क्रोधः**—श्रुतं मया शान्तिश्रद्धाविष्णुभक्तयो महाराजस्य प्रतिपक्षमाचरन्तीति। अहो मयि जीवति कथमासामात्मनिरपेक्षं चेष्टितम्। तथाहि—

अन्धीकरोमि भुवनं बधिरीकरोमि
धीरं सचेतनमचेतनतां नयामि।
कृत्यं न पश्यति न येन हितं शृणोति
धीमानधीतमपि न प्रतिसन्दधाति ॥२८॥

---

**शान्तेः कोऽभ्युपाय** इति। प्रतिपक्षादाक्रष्टुमिति शेषः।

**आत्मनिरपेक्षमिति**। स्वस्वरूपं परित्यक्तुम्, अथवा मामनादृत्येत्यर्थः। मयि जीवतीत्यनेन दर्शितं स्वप्रभावमेव दर्शयति—तथाहीति।

**अन्धीकरोमि** इतिकर्तव्यतामौढ्यं सम्पादयामि। भुवनमिति। भुवनस्थं जनम्। उच्चैरनुशिष्टमप्याचार्यैर्येन बाधिर्येण न शृणोति, तथा बधिरीकरोमि। धीरं धीमन्तम्। सचेतनं कार्याकार्यविषयविभागविवेचनक्षमम्। अन्धीकारफलमाह— कृत्यमिति। येनाहङ्कारेण गृहीतो हितमिह-

---

१. 'न्तेर्निवारणे को', २. 'वात्र' ख. पाठः.

लोभः — अरे ! मदुपगृहीता मनोरथसरित्परम्परामपि तावन्न तरिष्यन्ति, किं पुनः शान्त्यादींश्चिन्तायिष्यन्ति । पश्य —

सन्त्येते मम दन्तिनो मदजलप्रम्लानगण्डस्थला
वातव्यायतपातिनश्च तुरगा भूयोऽपि लप्स्येऽपरान् ।
एतल्लब्धमिदं लभे पुनरिदं लब्ध्वेत्यभिध्यायतां
चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा
[॥ २९ ॥

क्रोधः — सखे ! विदितस्त्वया मत्प्रभावः ।

त्वाष्ट्रं वृत्रमघातयत् सुरपतिश्चन्द्रार्धचूडोऽच्छिनद्
देवो ब्रह्मशिरो वसिष्ठतनयानाघातयत् कौशिकः ।

अपिचाहं —

विद्यावन्त्यपि कीर्तिमन्त्यपि सदाचारावदातान्यपि
प्रोच्चैः पौरुषभूषणान्यपि कुलान्युद्धर्तुमीशः क्षणात् ॥ ३० ॥

---

लोकपरलोकपथ्यं न शृणोतीति बधिरीकारे फलम् । अचेतनतासम्पादनफलमाह — धीमानिति ॥ २८ ॥

अथ लोभस्य प्रभावं दर्शयति — अरे इति ।

मदजलं दानवनं, तेन प्रकर्षेण म्लानस्तान्तः गण्डः कटो येषां ते तथा । वातवद् विशेषेणायतः पातो येषां ते वातव्यायतपातिनः वायुगतय इत्यर्थः । चिन्ताजर्जरमिति । बहुतरमनोरथपरम्परामरुन्मुखरधियामित्यर्थः ॥ २९ ॥

साम्यमसहमानः स्वात्मानमतिशाययति क्रोधः । त्वाष्ट्रं त्वष्टुरपत्यम् । ब्रह्मशिरोऽच्छिनदिति । अपरिच्छेद्यनिजरूपपरिच्छेदपरिश्रवणजातरोषो

---

१. 'न्ति जन्तवः । क्व पुनः', २. 'शे क्ष' ख. पाठः. ३. 'रफ' घ पाठः. ४. 'भस्वभा' क. ग. पाठः. ५. 'ये' घ. पाठः. ६. 'नं, ते' ख. पाठः. ७. 'मुर' क. घ. पाठः.

**लोभः** — तृष्णे! इतस्तावत् ।

(प्रविश्य)

**तृष्णा** — (क) अज्जउत्त! आणवेदु ।

**लोभः** — प्रिये! श्रूयतां —

क्षेत्रग्रामवनाद्रिपत्तनपुरद्वीपक्षमामण्डल-
प्रत्याशायतसूत्रबद्धमनसां लब्धाधिकं ध्यायताम् ।

(क) आर्यपुत्र! आज्ञापयतु ।

भगवाननृतसम्मिश्रितमुखं दुरितोदय[1]हेतुरिति छेदित[2]वानित्यर्थः । कुशिकसुतः कौशिकः[3] । यथा खलु विश्वामित्रो वसिष्ठप्रद्वेषात् तच्छिष्ये कल्माषपादनाम्नि नृपतौ कुतोऽपि कारणाद् विप्रशापप्रपीडिते कमपि राक्षसं समावेश्य तेन राक्षसेन वसिष्ठतनयानखिलानाघातयदभक्षयद् इत्यर्थः । एवं तावद् देवादीनां व्यापारो दर्शितः । अधुना मनुष्यानधिकृत्य दर्शयति — अपिचेत्यादिना । उद्धर्तुमुन्मूलयितुम् ॥ ३० ॥

सर्वतः समादित्सारूपो लोभः कदाचिदप्यनलम्प्रत्ययरूपां भार्यामात्मसामर्थ्यप्रकटनायाह्वयति — **तृष्णे** इति । तृष्णा[4] नाम सार्वत्रिकी निरङ्कुशेच्छा । उक्तं च —

"इदं मे स्यादिदं मे स्यादिति भेदविकल्पिता ।
मानसी साध्यविषया वृत्तिरिच्छेति कथ्यते[5] ॥"

इति ।

**तृष्णा** । आर्यपुत्र! आज्ञापयतु ।

**क्षेत्रं** केदारम् । पत्तनं नगरम् । पुरं राजाधिष्ठानम्[6] । द्वीपाः जम्बूद्वीपादयः । क्षमामण्डलं भूमण्डलम् । एवमुक्तेष्वनुक्तेषु च प्रत्याशा परिजिहीर्षासहनम् । उक्तं च —

१. 'तद्दे' ख. पाठः. २. 'तच्छेदि', ३. 'को विश्वामित्रः । य',. ४. 'ष्णा सा' घ. पाठः. ५. 'ते ॥" तृ' ख. पाठः. ६. 'ष्ठितम् । द्वी' ख. घ. पाठः.

तृष्णे! देवि! यदि प्रसीदासि तनोष्यङ्गानि तुङ्गानि चेत्
तद् भोः प्राणभृतां कुतः शमकथा ब्रह्माण्डलक्षैरपि ॥३१॥

**तृष्णा**— (क) अज्जउत्त! सअं जेव्व दाव अहं एदस्सिं अत्थे णिच्चं अहिजुत्ता। सम्पदं अज्जउत्तस्स अण्णाऐ बह्मण्ड-कोडीहिं पि ण मे उअरं पूरइस्सदि।

**क्रोधः**—हिंसे! इतस्तावत्।

(प्रीवश)

**हिंसा**—(ख) एसह्मि। आणवेदु अज्जउत्तो।

---

(क) आर्यपुत्र! स्वयमेव तावदहमेतास्मिन्नर्थे नित्यमभियुक्ता। साम्प्रतमार्यपुत्रस्याज्ञया ब्रह्माण्डकोटिभिरपि न मे उदरं पूरयिष्यते।

(ख) एषास्मि। आज्ञापयत्वार्यपुत्रः।

---

"विरोधेऽपि स्फुटे मह्यं कालेनैतद् भवेदिति।
अनुपेक्षाक्षमत्वं यत् पुंसामाशां वदन्ति ताम्[1] ॥"

इति। सैवाशा दीर्घसूत्रवत् सूत्रं बन्धनहेतुत्वात्। तेनेत्यर्थः। यदि प्रसीदसीति। न कदाचिदपि सञ्जातालंप्रत्यया चेत्[2]। अङ्गानि तुङ्गानीति। प्रतिविषयं तरुणतरतृष्णाविशेषावयवोच्चितानि निर्वर्तयसि चेत् तर्हि सिद्धं नः समीहितमित्यर्थः ॥ ३१ ॥

**तृष्णा**। आर्यपुत्र! स्वयमेव तावद[3]हमेतास्मिन्नर्थे नित्यमभियुक्ता। साम्प्रतमार्यपुत्रस्याज्ञया ब्रह्माण्डकोटिभिरपि न मे उदरं पूरयिष्यते[4]।

"अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्।"

इति न्यायादस्मदभिप्राय एवार्यपुत्र[5]स्य व्यवसायोऽप्यतोऽनुकूलैवाहमित्यर्थः।

ततोऽखिलप्राणिनां प्रा[6]णप्रतिहतिलक्षणा हिंसा। एषास्मि। आज्ञापयत्वार्यपुत्रः।

---

१. 'म् ॥" सै' ख. पाठः. २. 'त् तर्हि' क. पाठः. ३. 'देत' ख. घ. पाठः. ४. 'ति' ग. घ. पाठः. ५. 'त्र व्य' घ. पाठः. ६. 'णह' ख. घ. पाठ

क्रोधः—प्रिये! सहधर्मचारिण्या त्वया मातृपितृवधोऽपि ममेषत्कर एव। तथाहि—

केयं माता पिशाची क इव हि जनको भ्रातरः केऽत्र कीटा
वन्ध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी।

(हस्तौ निष्पीड्य)

आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे स्फुलिङ्गाः
॥ ३२ ॥

(विलोक्य) एष स्वामी। तदुपसर्पामः।

सर्वे—(उपसृत्य) जयतु जयतु देवः। एते वयं किङ्कराः। तदादिशतु देवः।

महामोहः—श्रद्धायास्तनया शान्तिरस्मद्विद्वेषिणी। सा भवद्भिरवहितैर्निग्राह्या।

सर्वे—यदादिशति देवः।

(इति निष्क्रान्ताः)

---

**सहधर्मचारिण्या** धर्मपत्न्या। ईषत्कर इति। अत्यन्तकठोरतरो हि मात्रा[1]दिवधः। सोऽप्यनुकूलया त्वया ईषत्करः अक्लेशेन कर्तुं शक्यत इत्यर्थः।

**बन्धुवर्गः** सम्बन्धिनः। ज्ञातयः सगोत्रिणस्तेऽपि कुटिला अनृजवो विटाः स्वार्थपराः सुहृद इव व्यापारवन्तः। हिंसा चेदनुकूला भवति, तदानीं क्रोधोऽपि निरर्गलो भवतीत्याह—हस्ताविति। स्फूर्जन्तः स्फुरन्तः। स्फुलिङ्गा अग्निकणाः॥ ३२ ॥

**श्रद्धायास्तनयेत्यत्र** सात्त्विकश्रद्धापुत्री विवक्षिता।

---

१, 'तुपित्रादि' क. पाठः.

**महामोहः**—श्रद्धायास्तनया इत्युपक्षेपेणोपायान्तरमपि हृदयमारूढम् । तथाहि — शान्तेर्माता[1] श्रद्धा । सा च परतन्त्रा । तत् केनाप्युपायेनोपनिषत्सकाशात्[2] तावच्छ्रद्धापकर्षणं कर्तव्यम् । ततो मातृवियोगदुःखा[3]दतिमृदुलतरा शान्तिरुपरता भविष्यति अवसीदन्ती वा विरंस्यति । श्रद्धां चाक्रष्टुं मिथ्यादृष्टिरेव विलासिनी प्रगल्भेति तस्मिन् विषये सैव नियोज्या । (पार्श्वतो विलोक्य) विभ्रमावति[4] ! सत्वरमाहूयतां मिथ्यादृष्टिर्विलासिनी ।

**विभ्रमावती**—(क) जं देवो आणवेदि ।

(निष्क्रम्य मिथ्यादृष्ट्या सह प्रविशति ।)

**मिथ्यादृष्टिः**—(ख) सहि ! चिरदिट्ठस्स महाराअस्स कंह मुहं पेक्खिस्सम् । णं महाराओ मं उवाळम्भिस्सदि ।

(क) यद् देव आज्ञापयति ।

(ख) सखि ! चिरदृष्टस्य महाराजस्य कथं मुखं प्रेक्षिष्ये । ननु महाराजो मामुपालम्भिष्यति ।

क्रोधादिभिरुपायैरयमर्थः साध्य इत्यभाणि । सम्प्रति प्रसङ्गप्राप्तमुपायान्तरमपत्याह — **श्रद्धाया** इति । श्रद्धायाः खलु विरोध्युपेक्षापूर्वककरणोपरमलक्षणा शान्तिर्भवति । अतस्तत्पारतन्त्र्यमित्यर्थः । श्रद्धाकर्षणोपायान्तरस्य फलमाह — तत इति ।

नास्तिकतालक्षणमिथ्यादृष्टिसम्पादिता हेला **विभ्रमावती** । यद्देव आज्ञापयति ।

**मिथ्यादृष्टिः** । सखि ! चिरदृष्टस्य महाराजस्य कथं मुखं प्रेक्षिष्ये । ननु महाराजो मामुपालम्भिष्यति ।

१. 'न्तिर्नाम श्रद्धाप', २. 'शाच्छ्र', ३. 'गाद' ख. पाठः. ४. 'मब' ग. पाठः. ५. 'मिस्रा' ख. घ. पाठः. ६. 'का हे' ग. पाठः.

**विभ्रमावती**— (क) सहि !, तुह दंसणे[1] अप्पाणं पि महाराओ ण चेदइस्सादि[2] । तदो कहं उवालम्भिस्सादि ।

**मिथ्यादृष्टिः**— (ख) कीस मं अलीअसोहग्गं संभाविअ विडम्बेसि ।

**विभ्रमावती**—(ग) सहि ! संपदं जेव्व[3] पेक्खिस्सं अलिअत्तणं सोहग्गस्स । अण्णं च घुण्णन्तणिद्दाउलं[4] विअ पिअसहीए लोअणं पेक्खामि । ता किं[5] खु पिअसहीए विणिद्दाए कारणम् ।

(क) सखि ! त्वद्दर्शने आत्मानमपि महाराजो न चेतयिष्यति । ततः कथमुपालम्भिष्यति ।

(ख) कस्मान्मामलीकसौभाग्यां सम्भाव्य विडम्बयसि ।

(ग) सखि ! साम्प्रतमेव प्रेक्षिष्ये अलीकत्वं सौभाग्यस्य । अन्यच्च घूर्णमाननिद्राकुलमिव प्रियसख्या लोचनं प्रेक्षे । तत् किं खलु प्रियसख्या विनिद्रतायाः कारणम् ।

**विभ्रमावती** । सखि ! त्वद्दर्शने आत्मानमपि महाराजो न चेतयिष्यति । ततः[6] कथमुपालम्भिष्यति ।

**मिथ्यादृष्टिः** । कस्मान्मामलीकसौभाग्यां सम्भाव्य विडम्बयसि । परिहससीत्यर्थः ।

**विभ्रमावती** । सखि ! साम्प्रतमेव प्रेक्षिष्ये अलीकत्वं सौभाग्यस्य । अन्यच्च घूर्णमाननिद्राकुलमिव प्रियसख्या लोचनं प्रेक्षे । तत् किं खलु प्रियसख्या विनिद्रतायाः कारणम् ।

१. 'णमत्तेण अ', २.* 'वेदइस्सिदि ।' ग. पाठः. ३. 'एव्व', ४. 'म्मन्तविणिद्दाउ', ५. 'किं णु खु' ख. पाठः. ६. 'कुत उपा' ख. घ. पाठः.

**मिथ्यादृष्टिः**—(क) एक्कवल्लहा वि जा इत्थिआ होइ, ताए वि णिद्दा दुल्लहा[1] णाम । किं उण अह्माणं सअल[2]वल्लहाणम् ।

**विभ्रमावती**—(ख) के उण पिअसहीए वल्लहा ।

**मिथ्यादृष्टिः**—(ग) महा[3]राओ, तदो उवरि कामो, कोहो, लोहो अ । अहव अलं विसेसेण, एत्थ उले जो जादो हिअअणिहिदाए रत्तिं[4]दिअहाइ अहिरमइ मए ण विणा बालो ठविरो जुवाणो अ ।

**विभ्रमावती**—(घ) णं कामस्स रई, कोहस्स हिंसा,

(क) एकवल्लभापि या स्त्री भवति, तस्या अपि निद्रा दुर्लभा नाम । किं पुनरस्माकं सकलवल्लभानाम् ।

(ख) के पुनः प्रियसख्या वल्लभाः ।

(ग) महाराजः, तत उपरि कामः क्रोधो लोभश्च । अथवालं विशेषेण, अत्र कुले यो जातो हृदयनिहितया रात्रिदिवसान्यभिरमते मया न विना बालः स्थविरो युवानश्च ।

(घ) ननु कामस्य रतिः, क्रोधस्य हिंसा, लोभस्य तृष्णा परम-

**मिथ्यादृष्टिः** । एकवल्लभापि या स्त्री भवति तस्या अपि निद्रा दुर्लभा नाम । किं पुनरस्माकं सकलवल्लभानाम् ।

**विभ्रमावती** । के पुनः प्रियसख्या वल्लभाः ।

**मिथ्यादृष्टिः** । महाराजः, तत उपरि कामः क्रोधो लोभश्च । अथवा अलं विशेषेण अत्र कुले यो जातो हृदयनिहितया रात्रिदिवसानि अभिरमते मया न विना बालः स्थविरो युवानश्च ।

**विभ्रमावती** । ननु कामस्य रतिः क्रोधस्य हिंसा लोभस्य तृष्णा

१. 'हा । ता किं उ', २. 'ळाअव', ३. 'हाराअमहामोहो दाव‌उ', ४. 'त्तिंदि' ख. पाठः.

ळोहस्स तिण्हा[१] परमप्पिअत्ति सुणीअदि । तासं कधं पिअ-[२] जणं णिच्चं रमअन्ती इस्सं[३] ण जणेसि !

**मिथ्यादृष्टिः**—(क) इस्सत्ति किं भणीअदि । ताओ वि मए विणा मुहुत्तं वि ण तुस्सन्ति ।

**विभ्रमावती**—(ख) अदो जेव्व भणामि तुह सरिसी सुहआ इह पुहिवीए णत्थि त्ति । जाए सोहग्गवेरग्गविज्जरिअहिअआओ सवत्तीओ वि सम्पसादं पडिच्छन्ति । सहि ! अण्णं वि भणामि । एवं णिद्दाउळहिअआ विसंठुळक्ख-

---

प्रियेति श्रूयते । तासां कथं प्रियजनं नित्यं रमयन्ती ईर्ष्यां न जनयसि ।

(क) ईर्ष्येति किं भण्यते । ता अपि मया विना मुहूर्तमपि न तुष्यन्ति ।

(ख) अत एव भणामि, तव सदृशी सुभगा इह पृथिव्यां नास्तीति । यस्याः सौभाग्यवैराग्यविज्वरितहृदयाः सपत्न्योऽपि संप्रसादं प्रतीच्छन्ति । सखि! अन्यदपि भणामि । एवं निद्राकुलहृदया विसंस्थुलस्खलच्चरणनूपुरझ-

---

परमप्रियेति श्रूयते । तासां कथं प्रियजनं नित्यं रमयन्ती ईर्ष्यां न जनयसि ।

**मिथ्यादृष्टिः** । ईर्ष्येति किं भण्यते । ता अपि मया विना मुहूर्तमपि न तुष्यन्ति ।

**विभ्रमावती** । अत एव भणामि तव सदृशी सुभगा इह पृथिव्यां नास्तीति । यस्याः सौभाग्यवैराग्यविज्वरितहृदयाः सपत्न्योऽपि सम्प्रसादं प्रतीच्छन्ति । सखि! अन्यदपि भणामि । एवं निद्राकुलहृदया विसंस्थु-

---

१. 'तह्णा', २. 'ण पि', ३. 'स्सं कहं ण' ख. पाठः.

ळन्तचळणणेउरझंकारमुहराए गदीए महाराअं संभावअन्ती संकिदाहिअअं करिस्सदि पिअसहित्ति तक्केमि ।

**मिथ्यादृष्टिः** — (क) किं एत्थ संकिदव्वं । णं अह्माणं महाराअणिउत्ताणं जेव्व एसो अविणओ । अविअ दंसणमत्तप्पसादिअपुरुसाणं जुवईणं केरिसं भअम् ।

**महामोहः** — (विलोक्य) अये सम्प्राप्तैव प्रिया मे मिथ्यादृष्टिः[1] । यैषा —

श्रोणीभारभरालसा दरगलन्माल्यापवृत्तिच्छला-
लोलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः ।

झ्कारमुखरया गत्या महाराजं सम्भावयन्ती शङ्कितहृदयं करिष्यति प्रियसखीति तर्कयामि ।

(क) किमत्र शङ्कितव्यम् । नन्वस्माकं महाराजनियुक्तानामेवैषोऽविनयः । अपिच दर्शनमात्रप्रसादितपुरुषाणां युवतीनां कीदृशं भयम् ।

लस्खलच्चरणनूपुरझङ्कारमुखरया गत्या महाराजं सम्भावयन्ती शङ्कितहृदयं करिष्यति प्रियसखीति तर्कयामि ।

**मिथ्यादृष्टिः** । किमत्र शङ्कितव्यम् । नन्वस्माकं महाराजनियुक्ता-[2]नामेवैषोऽविनयः । अपिच दर्शनमात्रप्रसादितपुरुषाणां युवतीनां कीदृशं भयम् ।

एवं तावद् विभ्रमावतीमिथ्यादृष्टिव्यपदेशेन स्त्रीणां पुरुषचित्तप्रलोभकत्वं पुरुषाणां च योषिद्वीक्षणेन तूलायमानत्वमित्येवमदर्शि[3] । सम्प्रत्यारादागतां मिथ्यादृष्टिमालक्ष्याह—**विलोक्येति** । तत्र मोहो नामानित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मत्वाभिमानः । मिथ्यादृष्टिर्नाम मोहसंस्कारसञ्जाता अरमणीयेषु विषयेषु रमणीयतो[4]बुद्धिः ।

तामेव विशिनष्टि — **श्रोणीति** । पृथुतरो[5]नितम्बबिम्बगुरु[6]भरपरि-

१. 'ष्टिर्विलासिनी । यै' ख. पाठः. २. 'कुतो भ' घ. पाठः ३. 'तदद', ४. त्वादिबु', ५. 'मनि' ख. घ. पाठः. ६. 'इतरभ' ख. ग. घ. पाठः.

नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो
दोरान्दोलनलोलकङ्कणझणत्कारोत्तरं सर्पति ॥ ३२ ॥

**विभ्रमावती** — (क) एसो महाराओ। उवसप्पदु पिअ-सही।

**मिथ्यादृष्टिः** — (उपसृत्य) (ख) जअदु जअदु महाराओ।

**महामोहः** — प्रिये!

दलितकुचनखाङ्कमङ्कपालीं
रचय ममाङ्कमुपेत्य पीवरोरु!।

(क) एष महाराजः। उपसर्पतु प्रियसखी।

(ख) जयतु जयतु महाराजः।

खेदपरवशम[1]दनमन्दमधुरतर[2]खेलगतिशालिनीत्यर्थः। दरं स्तोकं धम्मिल्लादी-षद्गलतः स्खलतो माल्यस्यापवृत्तिः पुनरपि[3] तत्रैव सं[4]वरणं तेन व्याजेन लोलं च[5]लं (यथा) तथा ऊर्ध्वं क्षिप्ताभ्यां भुजाभ्यां प्रकाशितयोः कुचयोः अभि-व्यज्यमानानां नखपदानां पङ्क्ति[6]र्यस्याः सा तथोक्ता। दीर्घतरया दृष्ट्या कटाक्षमालया धयन्ती अस्मन्मनो हरन्तीत्यर्थः। दोष्णोरान्दोलनेन डोला-यितेन लोलं च[7]लं कङ्कणं करभूषणं (यस्याः? तस्य) झणदित्यनुकरणशब्दः। तदुत्तरं तत्प्रचुरं यथा[8] तथा गच्छतीत्यर्थः ॥ ३२ ॥

**विभ्रमावती**। एष महाराजः। उपसर्पतु प्रियसखी।

**मिथ्यादृष्टिः**। जयतु[9] जयतु महाराजः।

चिरोत्कण्ठितमासाद्य प्रियासङ्ग[10]मौत्सुक्यभारपरिखेदपरवशः प्राह— **प्रिये** इति।

पृथुतरंपीनपीवररमणीयोत्तुङ्गकुचकलशनखपदविद[11]लनं यथा भवति

१. 'दमदनमधु' ग. पाटः. २. 'मदभावालसग' ख. घ. पाटः. ३. 'पि सं' ख. पाठः. ४. 'वा' ख. ग. घ. पाठः. ५. 'चञ्चलं' घ. पाठः. ६. 'क्तिर्विद्यतेर्य-स्याः' ख. पाठः. ७. 'ञ्चलं', ८. 'था भवति त', ९. 'तु म', १०. 'म', ११. 'लेखनं' घ. पाठः.

अनुहर हरिणाक्षि! शङ्करार्ध-

स्थितहिमशैलसुताविलासलक्ष्मीम् ॥ ३४ ॥

(मिथ्यादृष्टिः सस्मितं तथा करोति ।)

**महामोहः**—(आलिङ्गनसुखमभिनीय) अहो प्रियायाः परिष्वङ्गात् परावृत्तं नवयौवनेन । तथाहि —

यः प्रागासीदभिनववयोविभ्रमोवाप्तजन्मा[2]

चित्तोन्माथी विगतविषयोपप्लवानन्दसान्द्रः ।

---

तथा परिरम्भणायमित्यर्थः[3] । **शङ्करार्धेति** । यथा खलु परमेश्वरेण परमकारुणिकेन भक्तजनपरवशेनात्मपक्षपातेन अनन्यशरणतयाश्रितश्रीपार्वत्याः परमतरभक्तिश्रद्धास्नेहबहुमानबाहुल्यदर्शनविनिघ्ननिजतेजसा सामि समनुगृहीतं, तद्वदिह ममापि प्रिये! प्रचुरतरपरिष्वङ्गपरमसौख्यसम्प्रकाशनेनात्मतनुं सर्वात्मना समनुगृहाणेत्यर्थः । उक्तं च —

"अतिस्नेहापकृष्टोमा देहार्धं शूलिनः श्रिता ।
त्वं तु सर्वात्मनात्मानं कृत्स्नं मामाप्तुमिच्छसि ॥"

इति ॥ ३४ ॥

**परावृत्तं** पुनरपि सम्प्राप्तं तारुण्येन । तदेव दर्शयति—**तथाहीति** ।

यो मान्मथो विकारः प्रागासीदिति व्यवहितेन सम्बन्धः । कथम्भूतः प्रागिति तत्राह — **अभिनवेति** । अभिनवत्वं नाम[4] वयसः पञ्चविंशाब्दिकत्वम् । वयसो विभ्रमस्तदुद्रेकस्तेन प्राप्तोत्पत्तिरित्यर्थः । स एव विशेष्यते — चित्तोन्माथीति । मान्मथः खलूद्वेलमुज्जृम्भमाणो विकारः प्राणवल्लभासमागम[5]मृदुतरमधुरविरचितमदमन्दमन्द्र[6]मञ्जुलक्वाणितलालित[7]सरससीत्कारविशदचतुरपरिरम्भण[8]परमसौख्याविवशो[9] विभ्रमयति यूनां चित्तमित्यर्थः । पुनरपि विशेष्यते — विगतविषयेति । विगतो विभ्रष्टो विषयै-

---

१. 'याप' घ. पाठः. २. 'मोपात्तज' ख. पाठः. ३, 'तीत्य' क. पाठः. ४. 'म प', ५. 'नुगमनमृ', ६. 'न्दम', ७. 'तससी', ८. 'णसौ' ख. पाठः. ९. 'परव' क. पाठः.

वृत्तीरन्तस्तिरयति तवाश्लेषजन्मा स कोऽपि
प्रौढप्रेमा नव इव पुनर्मान्मथो मे विकारः ॥ ३५ ॥

**मिथ्यादृष्टिः** —(क) महाराअ! अहं वि संपदं णवजोव्वणा संवुत्ता। ण खु भावाणुबन्धो पम्मो काळेणावि विहडइ। आणवेदु भट्टा किंणिमित्तं भट्टिणा सुमरिदाह्मि।

(क) महाराज! अहमपि साम्प्रतं नवयौवना संवृत्ता। न खलु भावानुबन्धः प्रेमा कालेनापि विघटते। आज्ञापयतु भर्ता किन्निमित्तं भर्त्रा स्मृतास्मि।

रुपप्लव उपरागो यस्य स तथा। प्राणवल्लभा[1]व्यतिरिक्तविषया[2]न्तरोपरागमन्तरेण सान्द्रानन्द इत्यर्थः। चिरविरहपरिखेदपरिम्लायमानमानसानां[3][4] खलु यूनां प्राणवल्लभासमागमसञ्जातसम्भ्रमाणां सकलान्यपीन्द्रियाणि सहसैव सम्भूय सोत्कण्ठं प्राणनाथास[5]रसतरमृ[6]दुलमधुरमञ्जुलरामणीयकललितलावण्यविशदमदनमदखेलगतिशालिषु तरलतरविवशपरिम्लानम[7]नोहराङ्गप्रत्यङ्गेषु युगपदेव निर्ला[8]यितानि। अतो न तद्व्यतिरिक्तविषयविषक्ततेति भावः। अत एवान्तःकरणवृ(त्तयः? त्ती)स्तिरयन्त्य[9]त्रैव वर्तन्त इत्यर्थः। पुनःशब्दोऽत्र इदानीमर्थः[10]। स एवेदानीमागत इत्यर्थः। कोऽपीति। स्वानुभवैकसमधिगम्य इत्यर्थः। तथाप्ये[11]तदेवमिति वक्तव्यमिति चेदाग्रहस्तत्राह — तवाश्लेषजन्मेति। प्रकर्षेणोढः प्राणनाथायामेव प्रेमा प्रीतिः। उक्तं च —

"पुंसः पूर्वापरीभूता सुखित्वेन व्यवस्थितिः।
बुद्धेरुन्मीलनी गाढं प्रीतित्वेन निगद्यते॥"

सा यस्य[11] स तथोक्तः। इवशब्द एवार्थे। अभिनव एव संवृत्त इत्यर्थः॥३६॥

**मिथ्यादृष्टिः**। महाराज! अहमपि साम्प्रतं नवयौवना संवृत्ता।

१. 'भाति' क. घ. पाठः. २. 'योप' ख. पाठः. ३. 'नां यू' घ. पाठः. ४. 'नां खलु प्रा' ख. घ. पाठः. ५. 'धररसमृ' घ. पाठः. ६. 'दुम' ख. पाठः. ७. 'यमानम' ख. घ. पाठः. ८. 'पायि', ९. 'न्यत्रै,' ख. पाठः. १०. 'र्थे।' ख. घ. पाठः. ११. 'प्येव' क. ग. पाठः.

**महामोहः**—प्रिये !

स्मर्यते सा हि वामोरु! च्युता या हृदयाद् बहिः ।
मच्चित्तभित्तौ भवती सालभञ्जीव राजते ॥ ३६ ॥

**मिथ्यादृष्टिः**—(क) महप्पसादो ।

**महामोहः**—यथैव प्रकाशितैरङ्गैः सर्वत्र विचरसि तथैव प्रवर्तितव्यम् । अन्यच्च दास्याःपुत्री श्रद्धा विवेकेन सहोपनिषदं संयोजयितुं कुट्टिनीभावं प्रतिपन्ना । ततः—

प्रतिकूलामकुलजां पापां पापानुवर्तिनीम् ।
केशेष्वाकृष्य तां रण्डां पाषण्डेषु निवेशय ॥ ३७ ॥

---

(क) महान् प्रसादः ।

---

न खलु भावानुबन्धः प्रेमा कालेनापि विघटते । आज्ञापयतु भर्ता किन्निमित्तं भर्त्रा स्मृतास्मि ।

ननु किमर्थमेवमुच्यते । प्रिये ! व्यवहितार्थविषया खलु स्मृतिः । त्वं तु मच्चित्तभित्तौ कृत्रिमचित्रविचित्रा पुत्रिका स्त्रीव विराजसे । अतस्त्वामपरोक्षां कथं स्मरामीत्येतदाह—**स्मर्यत** इति ॥ ३७ ॥

**मिथ्यादृष्टिः** । महान् प्रसादः ।

दास्याः दासेर्याः । कुट्टिनी नाम प्रणयकलहकलुषितदम्पत्योः संबोधिका मञ्जुलभाषिणी शम्भली भण्यते । ततः किमिति तत्राह—**तत** इति ।

**प्रतिकूलाम्** अस्मद्विद्वेषिणीम् अकुलजामकुलीनां कुलक्षयप्रवृत्तविवेकाद्यनुसरणात् पापां पापानामनुसरणादेव पापानुवर्तिनीं तां रण्डां विधवां पाषण्डागमेष्वेव सम्पादयेत्यर्थः ॥ ३७ ॥

---

१. 'हः—स्म', २. 'आ' ख. पाठः, ३. 'त्तली स्त्री' ख. घ. पाठः, ४. 'दासभार्यायाः ।' ख. ग. पाठः, ५. 'षीकृत' घ. पाठः ६. 'का श' ग. पाठः, ७. 'त्र', ८. 'नां तेषाम' घ. पाठः.

**मिथ्यादृष्टिः**—(क) ऐद्दहमेत्तए विसए[2] अळं भट्टिणो अहिणिवेसेण। वअणमत्तेणेव्व भट्टिणो दासव्व सव्वो अण्णीं[3] करिस्सदि[4]। सा खु मए मिच्छा धम्मो, सोक्खविग्घअराइं मिच्छा सत्थप्पळविदाइं त्ति भणअन्तीए झत्ति विवेअमग्गं जेव्व परिहिळिस्सदि, किं उण उवणिसदम्। अविअ—

विसआणन्दविमुक्के मोक्खे दोसाण दंसअन्तीए।
उवणिसआ हि विरत्ता झत्ति करिज्जइ मए सद्धा॥ ३८॥

**महाराजः**—यद्येवं सुष्ठु प्रियं मे सम्पादितं प्रियया। (पुनरालिङ्ग्य चुम्बति।)

---

(क) एतावन्मात्रे विषये अलं भर्तुरभिनिवेशेन। वचनमात्रेणैव भर्तुर्दास इव सर्व आज्ञां करिष्यति। सा खलु मया मिथ्या धर्मः, सौख्यविघ्नकराणि मिथ्या शास्त्रप्रलपितानीति भणन्त्या झटिति विवेकमार्गमेव परिहरिष्यति। किं पुनरुपनिषदम्। अपिच—

विषयानन्दविमुक्ते मोक्षे दोषान् दर्शयन्त्या।
उपनिषदा हि विरक्ता झटिति क्रियते मया श्रद्धा॥

---

**मिथ्यादृष्टिः**। एतावन्मात्रे[5] विषये अलं भर्तुरभिनिवेशेन। वचनमात्रेणैव भर्तुर्दास इव[6] सर्व आज्ञां करिष्यति। सा खलु मया मिथ्या धर्मः, सौख्यविघ्नकराणि मिथ्या शास्त्रप्रलपितानि इति भणन्त्या झटिति विवेकमार्गमेव परिहरिष्यति, किं पुनरुपनिषदम्। अपिच—

विषयानन्दविमुक्ते मोक्षे दोषान् दर्शयन्त्या।
उपनिषदा हि विरक्ता झटिति क्रियते मया श्रद्धा॥ ३८॥

---

१. 'जइ एव्वं अळं एत्थ वि', २. 'ए भत्तुणो अ', ३. 'णं क', ४. 'इ।' ख. पाठः. ५. 'त्रवि', ६. 'राज्ञां दास इव सर्वैः क' ख. घ. पाठः.

**मिथ्यादृष्टिः** — हन्त पआसे एव्वं पउत्तेण भत्तुणा ळज्जेमि ।

**महामोहः** — तद्भवतु । स्वागारमेव प्रविशामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीकृष्णमिश्रयतिविरचिते प्रबोधचन्द्रोदये
द्वितीयोऽङ्कः ॥

---

**मिथ्यादृष्टिः** । हन्त प्रकाश एवं प्रवृत्तेन भर्त्रा लज्जे । शालीना भवामीत्यर्थः । उक्तं च —

"स्खलितं मम जानीयुरिति चिन्तासमुद्भवा ।
मानसी विक्रिया लज्जा सर्ववृत्तिनिरोधिनी ॥"

इति ।

**तद्भवत्विति** । ह्रेपितामालक्ष्य सदसि तस्याः स्त्रीत्वाद् भवतु तर्हीति मन्वानोऽवरोधगृहं गत इत्यर्थः ॥

इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृतभगवता कृते नाटकाभरणे
द्वितीयोऽङ्कः ॥

---

१. 'हः—भव', २. 'वासागा' ख. पाठः. ३. 'त' ख. ग, घ. पाठः.

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति शान्तिः करुणा च ।)

शान्तिः—(सास्रम्) मातः! मातः! क्वासि । देहि मे प्रतिवचनम् ।

मुक्तातङ्ककुरङ्गका वनभुवः शैलाः स्खलद्वारयः
पुण्यान्यायतनानि सन्तततपोनिष्ठाश्च वैखानसाः ।
यस्याः प्रीतिरमीषु साद्य भवती चण्डालवेश्मोदरं
नीता गौः कपिलेव जीवति कथं पाषण्डहस्तं गता ॥१॥

---

एवं तावत् प्रतिकूलामकुलजामित्यादिना श्रद्धाकर्षणाय मिथ्यादृष्टिर्नियुक्ता महामोहेनेत्युक्तम्[1] । इदानीं[2] तु मिथ्यादृष्टिबलेन पाषण्डभूयं प्राप्ता श्रद्धेति वज्रपातोपमं वचनमाकर्ण्य[3] जातसम्भ्रमा शान्तिः कथं[4] नु नामाकलचास्मिन् भविष्यति मन्माता श्रद्धेत्याकुलाशया तावदसदायमेष्वेव तदन्वेषणाय करुणया सह प्रवर्तत इत्येतदाह—ततः प्रविशतीत्यादिना[6] । शान्तिर्नाम इन्द्रियोपरतिः । करुणा दुःखिविषया कृपा ।

मुक्तो विगत आतङ्को व्याधिः[7] (येषां) तथाविधाः कुरङ्गाः सारङ्गा यासु वनभूमिषु तास्तथा । स्खलद्वारयः पतन्निर्झराः । वैखानसाः वानप्रस्थाः । अग्निहोत्रादितपःप्रधाना इत्यर्थः । श्वपाकालयं गतेव धेनुः न जीवतीत्यर्थः ॥ १ ॥

---

१. 'त्यभाणि ।', २. 'नीं मि', ३. 'मुपश्रुत्यासहमाना सञ्जात' क. पाठः. ४. 'थं ना' ख. घ. पाठः. ५. 'तेत्या' क. पाठः. ६. 'ना । मु' क. ग. पाठः. ७. 'धिः—

"रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयम् ।
यक्ष्मातङ्कगदाबाधाः शब्दाः पर्यायवाचकाः ॥"

इति (येषां) तथाविधकुरङ्गकाः सा' क. पाठः. ८. 'ङ्गकाः व' ख. घ. पाठः. ९. 'ता धे' ख. पाठः.

अथवालं जीवि[1]तसम्भावनया । यतः —

मामनालोक्य न स्नाति न भुङ्क्ते न पिब[2]त्यपः ।
न मया रहिता श्रद्धा मुहूर्तमपि जीवति ॥ २ ॥

तद् विना श्रद्धया मु[3]हूर्तमपि शान्तेर्जीवि[4]तं विडम्बनमेव । तत् सखि! करु[5]णे! मदर्थं चितामारचय । यावदचि[6]रेमेव हुताशनप्रवेशेन त[7]स्याः सहचरी भवामि ।

**करुणा** — (सास्रम्) सहि! एव्वं विसमज्जोळणज्जाळावळीतिक्[8]खाइं अक्खराइं जप्पन्ती सव्वहा विलुत्तजीविअं मं करेसि । ता प[9]सीद । मुहुत्तअं धारे[10]दुं जीविअं पिअसही । जाव इदो तदो पुण्णेसु अस्समेसु मुणिअणसमाउळेसु भाईरहीतीरेसु सुणिउणं णिरूवह्म । सा कदाइ वि महामोहभीदा कहं वि पच्छण्णं णिवसइ ।

---

**मामनालोक्येति** । शान्तिश्रद्धयोर्जन्यजनकभावादन्यतराभावे न भवत्येवेति भावः । तस्मान्मात्रा विना मुहूर्तं कालमपि प्राणधार[11]णमयुक्तमित्यर्थः ॥ २ ॥

**करुणा** । सखि! एवं विषमज्वलनज्वालावलीती[12]क्ष्णान्यक्षराणि जल्पन्ती सर्वथा विलुप्तजीवितां मां करोषि । तस्मात् प्रसीद, मुहूर्तं धारयतु जीवितं प्रियसखी । यावदितस्ततः पुण्येष्वाश्रमेषु मुनिजनसमाकुलेषु भागीरथीतीरे[13]षु सुनिपुणं निरूपयावः । सा कदाचिदपि महामोहभीता क[14]थमपि प्रच्छन्नं निवसति ।

---

१. 'वनस', २. 'स्वपित्यपि ।', ३. 'क्षणार्धम', ४. 'वनं वि', ५. 'णे ! चि', ६. 'रादेव', ७. 'अ', ८. 'क्खदूसहाइं अ', ९. 'पसी', १०. 'हि' ख. पाठः. ११. 'णं हास्यामि' ख. घ. पाठः. १२. 'क्षणदुस्सहान्य' क. घ. पाठः. १३. 'षु नि' क. पाठः, १४. 'स्मिन्नपि' ग. पाठः.

**शान्तिः— सखि! कियदन्विष्यते ।**

**नीवाराङ्कितसैकतानि सरितां कूलानि वैखानसै-**
**राक्रान्तानि समिच्चषालचमसव्यास्ता गृहा यज्वनाम् ।**
**प्रत्येकं च निरूपिताः प्रतिपदं चत्वार एवाश्रमाः**
**श्रद्धायाः क्वचिदप्यहो सखि! मया वार्तापि नाकर्णिता ॥३॥**

---

**सखि! कियदन्विष्यत** इति । सर्वत्रापि निरूपितमित्यर्थः ।

तदेव दर्शयति— **नीवारेति** । नीवारः तृणधान्यं, रक्तशू[1]कमित्यर्थः । वैखानसै[2]राक्रान्तानि सेवितानि । ननु नीवाराङ्कितपुलिनेषु प[3]क्ष्यादीनामेव सम्भावना, न तपस्विनामिति चेत् । सत्यम् । एवमकृत[4]तपःश्रमाणामाशङ्का [5]शोशुभ्यते । तपस्विनः खलु मूलफलश्यामाक[6]रक्तशूकादिकमन्विष्य तत्सुलभसरित्[7]परिसरादिषु वर्तन्त एवं[8] । तत्रापि न मन्माता श्रद्धा सम्यगुपलब्धेत्यर्थः । चषालो यूपकटकः । चमसो नाम चतुरश्रो[9] यज्ञपात्रविशेषः । यज्ञशालायामपि न विद्यत एवेत्यर्थः । प्रत्येकमेकैकत्वेन । प्रतिपदमिति । नैष्ठिकादिभेदभिन्नेषु वर्णिगृहमेधिवनवासिपरिव्राजकाश्रमेषु चतुर्ष्वपि । प्रत्येकं प्रतिपदमिति । गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारिभेदाः । वार्ताकाः शालीनवृत्तयो यायावरा घोरसन्न्यासिन इति गृहमेधिभेदाः । तथा वैखानसा वालखिल्या औदुम्बराः फेनपा इति वानप्रस्थभेदाः । तथा कुटीचकबहूदकहंसपरमहंसा इति सन्न्यासिभेदाः । एवं [10]ब्राह्मणादिभेदेष्वाश्रम[11]भेदेषु नोपलब्धैव सेत्यर्थः । चत्वार एवेत्येवकारेण सुगतादिपाषण्डानां वर्णाश्रमित्वादिबाह्यतामसू[12]चयत् । वार्तापि नाकर्णितेति । रजस्तमोभिभूतचित्तानां न श्रद्धाया गन्धमात्रस्यापि अवकाश इति भावः ॥ ३ ॥

---

१. 'कम् ।', २. 'सैर्वनवासिभिरा' ख. घ. पाठः. ३ 'जळकादी', ४. 'तश्र', ५. 'सा शङ्क्यते ।' क. पाठः. ६. 'नीवारादि', ७. 'तीरा' क. ख. घ. पाठः. ८, 'वम् । त', ९. 'श्ये' क. ग. पाठः. १०. 'ब्रह्मचर्यादि' क. पाठः. ११. 'मेष्वपि प्रति परीक्षितेष्वपि नो' ख, घ; पाठः. १२. 'सूसुचत्' ग. पाठः.

**करुणा** — सहि! एव्वं भणामि । जइ सच्चेव्व सद्धा, तदो ण ताए ईरिसीं दुग्गइं संभावेमि । णखु तारिसीओ पुण्णमईओ तारिसं असंभावणिज्जं विपत्तिं अणुहोन्दि ।

**शान्तिः**— सखि! किन्तु प्रतिकूले विधातरि न संभाव्यते ।

तथाहि —

श्रीर्देवी जनकात्मजा दशमुखस्यासीद् गृहे रक्षसो
नीता चैव रसातलं भगवती पूर्वं त्रयी दानवैः ।
गन्धर्वस्य मदालसां च तनयां पातालकेतुश्छलाद्
दैत्येन्द्रोऽपजहार हन्त विषमा वामा विधेर्वृत्तयः ॥ ४ ॥

---

**करुणा** । सख्येवं भणामि । यदि सत्येव श्रद्धा, ततो न तस्या ईदृशीं दुर्गतिं सम्भावयामि । न खलु तादृश्यः पुण्यमय्यः तादृशीमसंभावनीयां विपत्तिमनुभवन्ति ।

बाढमेवं, तथापि दुरतिक्रमविक्रमः खलु विधिरिति मन्वाना प्राह शान्तिः — **सखीति** ।

तदेव दर्शयति — **तथाहीति** । यथा खलु जनकराजतनया[1] श्रीराघवस्य धर्मपत्नी स्वयमयोनिजा वरवधूजनशिखामणिरपि सम्प्राप्तरजनीचा[2]रिजनसन्त्रासा, यथा च त्रयी भगवती सकललोकमातापि विगलितपरं[3]दुष्पुरुषसम्बन्धकलङ्कपङ्का तात्पर्यप्रणतपरमेश्वरपादारविन्दाप्यसुरवैरि[4]वैभवपरिभवपरैर्हिरण्याक्षमुखैर्दनुसुतैः प्राप्तपातालतला, यथा च चित्ररथनाम्नः कस्यचिद् गन्धर्वस्य प्राप्तयौवनारम्भारब्धमनोभवसम्भारपरिखेदपरिम्लानमानससरसतरसुतारत्नस्य सान्द्रतरसादसमुद्वीक्षणसम्भ्रान्ताशयस्य, तत्सदृश-

---

१. 'दुहिता श्री' ख. पाठः. २. 'चरपरिजन' ग. पाठः. ३. 'रपुरु', ४. 'रिप' ख. घ. पाठः.

तद् भवतु । पाषण्डालयेष्वेव तावदनुसरावः ।

**करुणा**— सहि! एव्वं होदु ।

(इति परिक्रामतः ।)

**करुणा**—(सत्रासम्) सहि! रक्खसो रक्खसो ।

**शान्तिः**— क्वासौ राक्षसः ।

**करुणा**— पेक्ख पेक्ख । जो एसो गळन्तमळपङ्कपिच्छिळबीभच्छदुप्पेक्खदेहच्छई उळ्लुंछिअचिउरभरो मुक्कवसणेवसदुद्दंसणो सिहिसिहण्डपिंच्छिआहत्थो इदो जेव्व अहिवट्टदि ।

**शान्तिः**—सखि ! नायं राक्षसः । निर्वीर्यः खल्वयम् ।

---

वरवरान्वेषिणश्चित्ररथस्य किल मदालसां नाम सुतां पातालकेतुर्नाम कोऽपि दैत्यस्तामचूचुरत् । एवं हन्त बत विषमाः नानाविधाः वामा विपरीता विधिविलासा इत्यर्थः ॥ ४ ॥

एवंविधविधानवैचित्र्ये[1]ऽपि श्रेयस्कामैर्ननु तथापि श्रद्धासम्पादने यतनीयमेवावश्यमित्यभिप्रायेणाह — तद् भवत्वित्यादिना ।

**करुणा** । सख्येवं भवतु ।

**करुणा** । सखि! राक्षसो राक्षसः ।

(**करुणा** ।) पश्य पश्य । य एष गलन्मलपङ्कपिच्छिलबीभत्सदुष्प्रेक्ष्यदेहच्छविरुल्लुञ्छितचिकुरभरो मुक्तवसनवेषदुर्दर्शनः शिखिशिखण्डपिञ्छिकाहस्त इत एवाभिवर्तते । पिच्छिलो मलपङ्कपाङ्किल इत्यर्थः । उल्लुञ्छित उत्पाटिताश्चिकुरभरः केशभरः । केशपाशो[2]ल्लुञ्छनपर इत्यर्थः ।

**निर्वीर्यो** निष्प्र[3]भः ।

---

१. 'विधातुर्वै' क. ख. पाठः. २. 'शोल्लु' क. ग. पाठः. ३. 'ष्प्रतिभः' ग. पाठः.

**करुणा** — ता को एसो भविस्सदि ।

**शान्तिः** — सखि ! पिशाच इति शङ्के ।

**करुणा** — सहि ! एव्वं पप्फुरन्तमऊहमाळोब्भासिअ-मुअणन्तराळे जळन्तप्पचण्डमत्तण्डमण्डळे दिअहमुहे कहं पिसाआणं अवआसो ।

**शान्तिः**—तर्हि अनन्तरमेव नरकविवरादुत्तीर्णः कोऽपि नारकी भविष्यति । (विलोक्य विचिन्त्य च) आः ज्ञातम् । महा-मोहप्रवर्तितोऽयं दिगम्बरसिद्धान्तः । तत् सर्वथा दूरे परिहर-णीयमस्य दर्शनम् । (इति पराङ्मुखीभवति ।)

**करुणा** — सहि ! मुहुत्तअं चिट्ठ । जाव इदो सद्धां अण्णेसामि ।

(उभे तथा स्थिते ।)

(ततः प्रविशति यथानिर्दिष्टो दिगम्बरसिद्धान्तः ।)

**दिगम्बरः** — णमो अळुहन्ताणम् अळुहन्ताणम् । णवदुवाळघरमज्झे अप्पा दीवव्व पळित्तए । एसो जिणव-

---

**करुणा** । तर्हि क एष भविष्यति ।

**करुणा** । सखि ! एवं प्रस्फुरन्मयूखमालोद्भासितभुवनान्तराले ज्वलत्प्रचण्डमार्ताण्डमण्डले दिवसमुखे कथं पिशाचानामवकाशः ।

**करुणा** । सखि ! मुहूर्तं तिष्ठ यावदितः श्रद्धामन्वेषयामि ।

**दिगम्बरसिद्धान्तः** आर्हतसमयः ।

**नमोऽर्हद्भ्योऽर्हद्भ्यः** । नवद्वारगृहमध्ये आत्मा दीप इव प्रदीप्तः । एष जिनवरभाषितः परमार्थो धर्मो मोक्षसौख्यदः । यथा खलु पयःपूरपूर्ण-

---

१. 'मो ध' ग. पाठः.

ळभासिदो पळमत्थो मोक्खसुखदो धम्मो। (इति परिक्रामति)।

(आकाशे)

ळे ळे सावआ! सुणाह सुणाह —

मळमअपुग्गळपिण्डे सअळजळेहिं वि केळिसी सुद्धी।
अप्पा विमळसहावो ळिसिपळिचळणेहि जाणव्वो ॥ ५ ॥

किं भणाह, केळिसं ळिसिपळिचळणं ति। तं सुणाह—

दूळे चळणपणामो किदसक्काळं च भोअणं मिट्ठम्।
इस्सामळं ण कज्जं ळिसिणं दाळं ळमन्ताणम् ॥ ६ ॥

---

चषकनिक्षिप्तपद्मरागरक्तं क्षीरं तादृशव्यवहारगोचरं भवत्येवमेवायमपि करि-नरतुरगादिशरीरपरिमित आत्मा तत्सम्बन्धादहमिति प्रतीयते[1]। तस्य च बहिःसत्त्वे मानाभावात्, जिनवरभाषितत्वाच्च एवमेव दर्शनस्थितिरित्यर्थः।

एवं दर्शनं प्रदर्श्याधुना तज्ज्ञानोपाये[2]प्रकारं दर्शयितुं श्रावकान् परिकल्प्याह— आकाश इति। उक्तं च —

"अप्रत्यक्षेण पात्रेण करोत्यालापसङ्कथाम्।
यत्किञ्चित्कार्यसम्बन्धमाकाशवचनं तु तत् ॥"

इति। रे रे श्रावकाः! शृणुत शृणुत —

मलमयपुद्गलपिण्डे सकलजलैरपि कीदृशी शुद्धिः।
आत्मा विमलस्वभाव ऋषिपरिचरणैर्ज्ञातव्यः ॥

तत्र ऋषयो नामार्हतासिद्धान्तवेदिनः। पुद्गलपिण्डः शरीरम् ॥ ५ ॥

किं भणथ, कीदृशमृषिपरिचरणमिति। तच्छृणुत।

दूरे चरणप्रणामः कृतसत्कारं च भोजनं मृष्टम्।
ईर्ष्यामलं न कार्यमृषीणां दारान् रममाणानाम् ॥

दूर इति। दर्शनमात्रादेव सत्वरं नमस्कर्तव्यमित्यर्थः। सत्कार-सध्रीचीनम् अन्नं च सरसतरं दातव्यम्। भुक्तवतां तु तेषामृषीणां रन्तुं

---

१. 'मी', २. 'यं' ख. घ. पाठः.

(नेपथ्याभिमुखमवलोक्य) (क) सद्धे ! इदो दाव ।

(उभे सभयमालोकयतः ।)

(ततः प्रविशति तदनुरूपवेषा श्रद्धा ।)

**श्रद्धा** — किं आणवेइ ळाअउळं ।

(शान्तिर्मूर्छिता पतति ।)

**दिगम्बरसिद्धान्तः** — सावआणं कुडुम्बं मुहुत्तं पि मा पळिच्चअ ।

**श्रद्धा** — जं आणवेइ ळाअउळम् ।

(इति निष्क्रान्ता ।)

**करुणा** — समस्ससउ पिअसही । णहु णाममत्तेण पिअसहीए भेदव्वं । जदो सुदं मए अहिंसाए सआसादो

---

(क) श्रद्धे! इतस्तावत् ।

---

परदारान् अधिरोहतां रतिविच्छेदकेर्ष्यामलमपि परिहरणीयम् । यतः पुद्गलद्वयसम्बन्ध एवात्र केवलं विद्यते । न खल्वात्मनः काचिद् विक्रियास्तीति भावः ॥ ६ ॥

श्रद्धाधीनत्वात् सर्वप्रवृत्तेस्ततस्तामाह्वयति — श्रद्धे इति ।

**उभे सभयमालोकयत** इति । श्रद्धाशब्दश्रवणजातसात्त्विकश्रद्धाशङ्कया करुणाशान्ती सहसैव सान्द्रसंरम्भे जाते इत्यर्थः ।

**श्रद्धा** । किमाज्ञापयति राजकुलम् ।

**शान्तिर्मूर्छितेति** । पाषण्डैर्दूषिता मन्माता श्रद्धेति भ्रान्त्या मोहं गतेत्यर्थः ।

सम्प्रति कर्तव्यमुपदिशति — श्रावकाणां कुटुम्बं मुहूर्तमपि मा परित्यज ।

**श्रद्धा** । यदाज्ञापयति राजकुलम् ।

**करुणा** । समाश्वसितु प्रियसखी । न खलु नाममात्रेण प्रियसख्या

अत्थि पासण्डाणं वि तमसः सुदा सद्धेति । तेण एसा तामसी सद्धा भविस्सदि ।

शान्तिः — (समाश्वस्य) सखि! एवमेवैतत् ।

तथाहि —

दुराचारा सदाचारां दुर्दर्शा प्रियदर्शनाम् ।
अम्बामनुसरत्येषा दुराशा न कथञ्चन ॥ ७ ॥

तद् भवतु । तावत् सौगतालयेष्वप्यसावन्विष्यताम् ।

(शान्तिकरुणे परिक्रामतः ।)

(ततः प्रविशति पुस्तकहस्तो भिक्षुरूपो बुद्धागमः ।)

भिक्षुः — (विचिन्त्य) भो भोः उपासकाः !

साक्षात् क्षणक्षयिण एव निरात्मकाश्च
यत्रार्पिता बहिरिव प्रतिभान्ति भावाः ।

---

भेतव्यम् । यतः श्रुतं मया अहिंसायाः सकाशादस्ति पाषण्डानामपि तमसः सुता श्रद्धेति । तेनैषा तामसी श्रद्धा भविष्यति ।

**दुराचारेति** । विरुद्धाचरणत्वादस्याः पाषण्डश्रद्धायाः न मन्मात्रा सह सादृश्यगन्धोऽपीत्यर्थः ॥ ७ ॥

**बुद्धागमो** नाम बौद्धसिद्धान्तः ।

तदेव दर्शयति — **साक्षादिति** । साक्षात् क्षणक्षयिष्णुत्वं नाम भावानां तेरसाभङ्गुरत्वमुच्यते । निरात्मका निःस्वरूपा इत्यर्थः । एवं बाह्यार्थवादिनां बौद्धानां राद्धान्तः । सम्प्रति बाह्यार्थस्यापि अभावं मन्वानस्य विज्ञानवादिनो बौद्धस्य मतं दर्शयति — यत्रार्पिता इत्यादिना । यत्र विज्ञाने अर्पिता आरोपिताः । बहिरिवेतीवकाराद् बहिष्ट्वप्रतिभानं भ्रान्तमित्यर्थः । एवं तावत् संसारव्यवस्थासिद्धार्थसिद्धान्तोऽभिहितः । अधुना

---

१. 'चारत्वा' ख. पाठः. २. 'स्वरसभ' क. ग. पाठः. ३. 'ष्वपि प्र' क. पाठः.

सैवाधुना विगलिताखिलवासनत्वाद्
धीसन्ततिः स्फुरति निर्विषयोपरागा ।[1] ८ ॥

(परिक्रम्य पुनः सश्लाघम्) अहो साधुरयं सौगतधर्मो यत्र सौख्यं मोक्षश्च । तथाहि --

---

मोक्षव्यवस्थामाह — सैवेति । अधुनेति । चतुर्विधभावनापरिपाकानन्तरमिदानीमित्यर्थः । तत्र भावना नाम सर्वं क्षणिकं, सर्वं दुःखं, सर्वं स्वलक्षणं, सर्वं शून्यम् इत्येवमभ्यासरूपा । एवंविधभावनापरिपाकाच्च सैव सर्वभ्रमाधिष्ठानभूता स्वरसभङ्गुरविशुद्धविज्ञानसन्ततिः स्फुरति अभिव्यज्यते । तत्र हेतुमाह — विगलिताखिलवासनत्वादिति । चतुर्विधभावनापरिपाकबलात् सुखादिवेदनालक्षणवासना विगलिता विभ्रष्टा यतो भवन्ति, अतो बन्धनिवृत्तिरिति भावः । विशुद्धधीसन्ततिस्फुरणमेव स्फोरयति—निर्विषयेति । नीलपीतादिलक्षणविषयोपरागरहितेत्यर्थः । उक्तं च —

"प्रत्यक्षसिद्धं बाह्यार्थं बुद्धिं वैभाषिकोऽब्रवीत् ।
अध्याहारानुमेयार्थं बाह्यं सौत्रान्तिका विदुः ॥

बुद्धिमात्रं वदत्यत्र योगाचारो न चापरः ।
नास्ति बुद्धिरपीत्याह वादिमाध्यमिकः किल ॥

न सन्नासन्न सदसन्न चोभाभ्यां विलक्षणः ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

क्षणिकत्वमनैरात्म्यं सर्वेषामप्यस्ति(?) ।
आत्मावरणदेहस्य वस्त्राद्यावरणान्तिकम् ॥

न ग्राह्यं यदि गृह्णन्ति तत्रापि ह्यनवस्थितिः ।"

इति क्षपणकस्य सिद्धान्त इति । बुद्धितत्त्वे स्थिता बौद्धा इत्यर्थः ॥ ८ ॥

---

१. ति' क. ग. पाठः.

आवासो लयनं मनोहरमभिप्रायानुकूला वणिङ्-
नार्यो वाञ्छितकालमिष्टमशनं शय्या मृदुप्रस्तराः ।
श्रद्धापूर्वमुपासिकायुवतिभिः क्लृप्ताङ्गदानोत्सव-
क्रीडानन्दभरं व्रजन्ति विलसज्ज्योत्स्नाङ्कुरा रात्रयः ॥ ९ ॥

**करुणा**—सहि! को एसो तरुणतरताळतळुपळ्ळवो ळम्बन्तकसाअपिसङ्गचीरचीवरो सचूडमुण्डिअमुण्डवेसो इदो जेव्व अडिअच्छदि ।

**शान्तिः**—सखि! बुद्धागम एषः ।

**भिक्षुः**—(आकाशे) भो भो उपासकाः! भिक्षवश्च श्रूयतां भगवतः सुगतस्य वाक्यामृतम् । (पुस्तकं वाचयति ।) पश्याम्यहं दिव्येन चक्षुषा लोकानां सुगतिं दुर्गतिं च । क्षणिकाः सर्वे संस्काराः। नास्त्यात्मा स्थायी । तस्माद् भिक्षुषु

---

**लयनं** हर्म्यतलम् । अभिप्रायानुकूला अभिमतभावसदृशाचरणा इत्यर्थः । शय्याः सोपबर्हणकशिपुप्रभृतयः । मृदुप्रस्तराः मृदुलतरास्तरणास्तीर्णाः । श्रद्धापूर्वं प्रयोजनान्तरनिरपेक्षम् । उपासिकायुवतिभिरेतद्दर्शनदीक्षिताभिः । अङ्गदानोत्सवः परिरम्भणविभ्रमः । ज्योत्स्नाङ्कुरं कौमुदीकन्द(मि ? लि)तम् । ज्योत्स्नोत्करा इति वा पाठः । तत्पक्षे ज्योत्स्नोत्करः कौमुदीकूटम् । लयनमाश्वासनमिति केषाञ्चिद् पक्षः । वणिङ्नार्यो वेश्याः। उपासिकायुवतिभिः । उपासिका इति सिद्धान्तरुचयो दीक्षिता उच्यन्ते । उपासिकाश्च युवतयश्चेति कर्मधारयः ॥ ९ ॥

**करुणा** । सखि! क एष तरुणतरतालतरुपल्लवो लम्बमानकषायपिशङ्गचीरचीवरः सचूडमुण्डितमुण्डवेष इत एवाभिगच्छति ।

**सुगतिः** विहिताचरणनिमित्ता । दुर्गतिरितराचरणात् । संस्काराः

दारानाक्रमत्सु नेर्षितव्यम्। चित्तमलं हि तद्, यदीर्ष्या नाम।
(नेपथ्याभिमुखमवलोक्य) श्रद्धे! इतस्तावत्।

(प्रविश्य श्रद्धा।)

**श्रद्धा**—आणवेदु ळाअउळम्।

**भिक्षुः**— उपासकान् भिक्षूंश्च निर्भरमालिङ्ग्य स्थीयताम्।

**श्रद्धा**— जं आणवेदि ळाअउळम्। (इति निष्क्रान्ता।)

**शान्तिः**— सखि! इयमपि सैव तामसी श्रद्धा।

**करुणा**—एव्वं एदं।

**क्षपणकः**— (भिक्षुमालोक्योच्चैःशब्दम्) अळेळे भिक्खुअ! इदो दाव। किंपि पुच्छिस्सम्।

**भिक्षुः**— (सक्रोधम्) आः पाप! पिशाचाकृते! किमेवं प्रलपसि।

**क्षपणकः**— अळे! मुञ्च कोहम्। साच्छगदं पुच्छामि।

**भिक्षुः**— अरे क्षपणक! शास्त्रकथामपि वेत्सि। भवतु प्रतीमस्तावत्। (उपसृत्य) किं पृच्छसि।

---

पदार्थाः। नास्त्यात्मेति। नरकफलभोक्तुः स्थायिनोऽभावात् परदारारोहणेऽपि नामर्षितव्यमित्यर्थः।

श्रद्धा। आज्ञापयतु राजकुलम्।

निर्भरमालिङ्ग्य दृढं परिष्वज्य।

श्रद्धा। यदाज्ञापयति राजकुलम्।

करुणा। एवमेतत्।

क्षपणकः। अरे रे भिक्षुक! इतस्तावत्। किमपि प्रक्ष्यामि।

अरे! मुञ्च कोपम्। शास्त्रगतं पृच्छामि।

**क्षपणकः**— भण दाव क्खणविणासिणा तुए कस्स किदे वदं धाळीअदि ।

**भिक्षुः**—अरे श्रूयताम् । अस्मत्संततिपतितः कश्चिद् विज्ञानलक्षणः समुच्छिन्नवासनो मोक्ष्यते ।

**क्षपणकः**—अळे मुच्चळज्ज! कस्सिं वि मण्णन्तळे कोवि मुक्को भविस्सदि । तदो दे संपदं णट्ठस्स कीरिसं उवआळं कळिस्सदि । अण्णं वि पुच्छामि । केण दे ईरिसो धम्मो शंदिट्ठो ।

**भिक्षुः**—नूनं सर्वज्ञेन भगवता बुद्धेनोक्तोऽयमेव धर्मः ।

**क्षपणकः**—अळे! सव्वण्णो बुद्धो त्ति कधं तुए णादम् ।

**भिक्षुः**—ननु रे तदागमैरेव प्रसिद्धो बुद्धः सर्वज्ञ इति ।

**क्षपणकः**—अळे उज्झिअबुद्धअ! जइ तस्स भासिदेण सव्वण्णत्तं पडिवज्जेसि, ता अहं वि सव्वं जाणामि । तुमं पि पिदुपिदामहेहिं सत्तपुळिसेहिं मे दासो त्ति ।

**भिक्षुः**— (सक्रोधम्) आः पाप! पिशाच! मलपङ्कधर! किं तावदहं दासः ।

---

भण तावत् क्षणविनाशिना त्वया कस्य कृते व्रतं धार्यते ।

अरे मुक्तलज्ज! कस्मिन्नपि मन्वन्तरे कोऽपि मुक्तो भविष्यति । ततस्ते साम्प्रतं नष्टस्य कीदृशमुपकारं करिष्यति । अन्यदपि पृच्छामि । केन ते ईदृशो धर्मः सन्दिष्टः ।

अरे! सर्वज्ञो बुद्ध इति कथं त्वया ज्ञातम् ।

अरे उज्झितबुद्धिक[1]! यदि तस्य भाषितेन सर्वज्ञत्वं तस्य प्रतिपद्यसे, तस्मादहमपि सर्वं जानामि । त्वमपि पितृपितामहैः सप्तपुरुषैर्मे दास इति ।

---

१. 'ऋजुबुद्धिक' ग. पाठः.

**क्षपणकः** — अळे विहाळदासीभुअङ्ग ! दुट्ठपळिव्वजिअ! दिट्ठंदो मए दंसिदो । ता पिअं दे विस्सद्धं भणामि । बुद्धाणुसासणं पळिहळिअ अळिहन्ताणुसासणं जेव्व अनुसळिदु भवम् । दिअम्बळमदं आचळेदु भवम् ।

**भिक्षुः**—आः पाप! स्वयं नष्टः परानपि नाशयितुमिच्छसि ।

स्वाराज्यं प्राज्यमुत्सृज्य लोके निन्द्यामनिन्दितः ।
अभिवाञ्छति को नाम भवानिव पिशाचताम् ॥ १० ॥

अपिच, अर्हतोऽपि धर्मवेदनं कः श्रद्दधाति ।

**क्षपणकः**—गहणक्खत्तचाळचन्दसूळोपळाअदुक्खळपळमळहस्साणं आदेशसंवाददंसणेण णिळूविदं सव्वण्णत्तणं भअवदो अळिहन्तस्स ।

**भिक्षुः** — अरे ! अनादिप्रवृत्तेन ज्योतिषातीन्द्रियज्ञानेन प्रतारितेन भवतेदमातिकष्टं व्रतमाश्रितम् । तथाहि —

ज्ञातुं वपुःपरिमितः क्षमते त्रिलोकीं
जीवः कथं कथय सङ्गतिमन्तरेण ।

---

अरे विहारदासीभुजङ्ग! दुष्टपरिव्राजक! दृष्टान्तो मया दर्शितः । तस्मात् प्रियं ते विस्रब्धं भणामि । बुद्धानुशासनं परिहृत्यार्हतानुशासनमेवानुसरतु भवान् । तस्माद् दिगम्बर(पद ? मत)मेवाचरतु भवान् । विहारो नाम भिक्षूणां स्थानम् । भुजङ्गो धूर्तः । विहारदासीभुजङ्गो गृहदासीजिनविधेयइत्यर्थः । परिहृत्य त्यक्त्वा ।

(ननु?) ग्रहनक्षत्रचारचन्द्रसूर्योपरागदुष्करपरमरहस्यानामादेशसंवाददर्शनेन निरूपितं सर्वज्ञत्वं भगवतोऽर्हतः ।

**प्रतारितेन** विप्रलब्धेन ।

शक्नोति कुम्भनिहितः सुशिखोऽपि दीपो
भावान् प्रकाशयितुमप्युदरे गृहस्य ॥ ११ ॥

तस्माल्लोकद्वयविरुद्धादार्हतमताद् वरं सुगतमतमेव साक्षात् सुखावहमतिरमणीयं पश्यामः ।

**शान्तिः**—सखि! अन्यतो गच्छावः ।

**करुणा**— एवं भोदु ।

(इति परिक्रामतः ।)

**शान्तिः**—(पुरो विलोक्य) एष पुरस्तात् सोमसिद्धान्तः । भवतु । अत्रापि तावदनुसरावः ।

(ततः प्रविशति कापालिकरूपधारी सोमसिद्धान्तः ।)

**सोमसिद्धान्तः**—(परिक्रम्य)

नरास्थिमालाकृतचारुभूषणः
श्मशानवासी नृकपालभोजनः ।
पश्यामि योगाञ्जनशुद्धचक्षुषा
जगन्मिथो भिन्नमभिन्नमीश्वरात् ॥ १२ ॥

---

नन्वार्हतोक्तार्थस्य वृष्टयादेस्तथात्वदर्शनात् तस्य सर्वज्ञत्वं प्रतिपन्नमेवेति चेत्, तत्राह— **ज्ञातुमिति** । 'शरीरपरिमितः खल्वात्मे'ति तस्य मतम् । तथाच कथं मनसाप्यचिन्त्यरूपानन्तपदार्थज्ञानं चेतनस्यापि सतः सम्बन्धेन विना जाघटीति प्रदीपस्य समर्थस्याप्यदर्शनात् कुम्भनिहितस्येत्यर्थः ॥ ११ ॥

लोकद्वयविरोधो नाम पञ्चमलधारणरूपत्वादिहलोकसौख्यस्य दत्त एव जलाञ्जलिः । अमुत्र त्वस्य सन्ततगत्या क्लेश एव केवलं न पुनः सुखलवोऽपीत्यर्थः ।

**करुणा** । एवं भवतु ।
**सोमसिद्धान्तो** माहेश्वरं दर्शनम् ।

तदीयेतिकर्तव्यतानियमं दर्शयन् दर्शनमेव दर्शयति—**नरास्थीति** । योगो नाम तत्समयोदितपुरुषोपहारादिना यथोक्तप्रकारेण यथोक्तविशेषेण

---

१. 'न्द' ग. पाठः २. 'षणेन प' ख. पाठः.

**क्षपणकः**—अळे ! को एसो कावाळं वदं धाळेदि पुळिसो । ता एणं पुच्छिस्सम् । (उपसृत्य) अळे ळे कावाळिअ ! णळात्थिमुण्डधाळिअ ! कीळिसो तुह शोक्खो, कीळिसो तुह मोक्खो ।

**कापालिकः**—अरे क्षपणक ! धर्मं तावदस्माकमवधारय ।

मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतां
वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा ।
सद्यःकृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलै-
रर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरवः ॥ १३ ॥

---

परमेश्वरसमाराधनया सेवारूपः । स एवाञ्जनवत् संस्कारहेतुत्वाद् योगाञ्जनं, तेन शुद्धं दर्शनं पारमेश्वरं ज्ञानं चक्षुर्यस्य स तथोक्तः । एवंभूतदर्शनोऽहं विभुत्वात् कारणत्वाच्च परमेश्वरस्य अतस्तेनाभिन्नमिदं जगत् । परिच्छिन्नत्वात् कार्यत्वाच्च भिन्नमित्येवं भेदाभेदं पश्यामीत्यर्थः ॥ १२ ॥

**क्षपणकः** । अरे ! क एष कापालं व्रतं धारयति पुरुषः । तदेनं पृच्छामि । अरे ! कापालिक ! नरास्थिमुण्डधारिन् ! कीदृशं तव सौख्यं, कीदृशस्तव मोक्षः ।

साधनाधीना हि फलप्राप्तिरित्यभिप्रायेण स्वसामयिकसिद्धसाधनमेव दर्शयति—**धर्मं तावदिति** । अभिघारणमुपस्नेहनम् । महामांसं नरमांसम् । भूरिसम्पादितं वा । ब्रह्मणः कपालं ब्रह्मकपालं ब्राह्मणस्य वा कस्यचिदुत्कृष्टस्य शिरःकपालम् । तस्मिन् भूरि सम्पादितां मदिरां पूर्वं भैरवाय निवेद्य ततः शेषपानं पारणा । सद्यः सपदि कृत्तकठोरकण्ठात् कर्तितदृढतरपीनगलनालाद् विशेषेण गलतां कीलालानां रुधिराणां धाराभिरुद्रिक्तैः । नराणामामिषमेवोपहारः पूजासाधनं तेन बलिभिः पूजाविशेषैः । एवं समाराधनरूपोऽस्मद्धर्म इत्यर्थः ॥ १३ ॥

---

१. 'खण्डित' म. पाठः.

**भिक्षुः**—(कर्णौ पिधाय) बुद्ध! बुद्ध! अहो दारुणा धर्मचर्या ।

**क्षपणकः**—अलिहन्त! अलिहन्त! अहो घोलं पावं । कावालिएण केण वि विप्पलद्धो एव एसो त्ति तक्केमि ।

**कापालिकः**—(सक्रोधम्) आः पाप! पाखण्डापशद! मुण्डितमुण्ड! चण्डालवेष! केशलुञ्चक! अरे! विप्रलम्भकः किल चतुर्दशभुवनोत्पत्तिस्थितिप्रलयप्रवर्तको वेदान्तासिद्धान्तप्रसिद्धविभवो भगवान् भवानीपतिः । दर्शयामस्तर्हि धर्मस्यास्य माहिमानम् ।

हरिहरसुरज्येष्ठश्रेष्ठान् सुरानहमाहरे
　　वियति वहतां नक्षत्राणां रुणध्मि गतीरपि ।
सनगनगरीमम्भःपूर्णां विधाय महीमिमां
　　कलय सकलं भूयस्तोयं क्षणेन पिबामि तत् ॥ १४ ॥

**क्षपणकः**—अळे कावाळिअ! णं अदो जेव्व भणामि केण वि एन्दजाळिएण माअं दंसिअ विप्पळद्धोत्ति ।

**कापालिकः**—आः पाप! पुनरपि परमेश्वरमैन्द्रजालिकमित्यधिक्षिपसि । तन्न मर्षणीयमस्य दौरात्म्यम् । (खड्गमाकृष्य) तदहमस्य,

　　एतत्करालकरवालनिकृत्तकण्ठ-
　　　　नालोच्चलद्बहुलफेनिलबुद्बुदौघैः ।

---

क्षपणकः । अर्हन्! अर्हन्! अहो घोरं पापम् । कापालिकेन केनापि विप्रलब्ध एवैष इति तर्कयामि ।

अरे कापालिक! नन्वत एव भणामि केनाप्यैन्द्रजालिकेन मायां दर्शयित्वा विप्रलब्ध इति ।

सार्धं डमड्डमरुडांकृतिहूतभूत-
वर्गेण भर्गगृहिणीं रुधिरैर्धिनोमि ॥ १५ ॥

(इति खड्गमुद्यच्छति ।)

**क्षपणकः** — (सभयम्) महाभाअ! अहिंसा पळमो धम्मो। हिंसा पळमो अधम्मो । (इति भिक्षोरङ्कं प्रविशति ।)

**भिक्षुः** — (कापालिकं वारयन्) भो भो महाभाग! कौतुक-प्रयुक्तवाक्कलहेनायुक्तमेतस्मिंस्तपस्विनि प्रहर्तुम् ।

**कापालिकः** — (खड्गं प्रतिसंहरति ।)

**क्षपणकः** — (समाश्वस्य) महाभाओ जदि संहळिदघोळ-ळोसावेसो संवुत्तो, तदो अहं किं वि पुच्छिदुमिच्छेमि ।

**कापालिकः** — पृच्छ पृच्छ ।

**क्षपणकः** — सुदो तुह्माणं पळमो धम्मो। अध केळिसो मोक्खोत्ति ।

---

करालं भयङ्करम् । करवालः कृपाणः । फेनप्रकर एव फेनिलम् । संकेतसमयनिवेदनार्थं डमदित्येवं वाद्यमानडमरोर्डाङ्कृतिः डाम् इत्याकारः शब्दः तया आहूतप्रमथगणेन सह भर्गस्य भीमस्य गृहिणीं भार्यां धिनोमि प्रीणयामि ॥ १५ ॥

क्षपणकः । महाभाग! अहिंसा परमो धर्मो हिंसा परमोऽधर्मः ।

कौतुकं कुतुकम् । तपस्विनि वराके ।

क्षपणकः । महाभागो यदि संहृतघोररोषावेशः संवृत्तः, ततोऽहं किमपि प्रष्टुमिच्छामि ।

श्रुतो युष्माकं परमो धर्मः । अथ कीदृशो मोक्ष इति ।

निखिलविषयवैराग्यशालिनः सान्द्रानन्दाविर्भावो मोक्ष इति पक्षे

**कापालिकः — शृणु —**

**दृष्टं क्वापि सुखं विना न विषयैरानन्दबोधोज्झिता**

**जीवस्य स्थितिरेव मुक्तिरुपलावस्था कथं प्रार्थ्यते ।**

**पार्वत्याः प्रतिरूपया दयितया सानन्दमालिङ्गितो**

**मुक्तः क्रीडति चन्द्रचूडवपुरित्यूचे मृडानीपतिः ॥ १६ ॥**

**भिक्षुः — महाभाग! अश्रद्धेयमेतदवीतरागस्य मुक्तिरिति ।**

**क्षपणकः — अळे कावाळिअ! जइ ण लुस्सासि, तदो भणामि सळीळी मुक्को अ त्ति विळुद्धम् ।**

---

प्रतिक्षिपन्नाह — दृष्टमिति । लोके दृष्टानुसारेण तीर्थिकानां तीर्थकल्पना[1] कल्प्यते । लोके च तावद् विषयव्यतिरेकेणानन्दकलालवोऽपि सुषुप्त्यादौ नोपलब्धचरः । अतो निर्विषयमोक्षपक्ष उपेक्षणीयो विचक्षणैरिति भावः । उक्तं हि —

"अपि बृन्दावने शून्ये सृगालत्वं स इच्छति ।
न तु निर्विषयं मोक्षं कदाचिदपि गौतम! ॥"

इति । नवगुणोच्छित्तिलक्षणा स्तिमितजलधिकल्पा जीवस्य स्थितिरेव मुक्तिरिति प्राभाकराणां गलगर्जनम् । तदनूद्य निराकरोति — आनन्देति । एवं प्रेक्षावत्प्रार्थ्यं न भवतीत्यर्थः । त्वत्पक्षे पुनः कथं मुक्तो वर्तत इति चेत्, तत्राह — पार्वत्या इति । प्रतिरूपया सदृ(शया ?श्या) दयितया स्निग्धया । एवमेव मुक्तिरित्यत्र प्रमाणमाह — इत्यूचे मृडानीपतिरिति । सकलसंमतसर्वज्ञोदितत्वात्[3] सकलप्राणिसंवादाच्चास्य[4] सौख्यस्य, अतः समीचीनतास्य पक्षस्येति भावः ॥ १६ ॥

क्षपणकः । अरे कापालिक! यदि न रुष्यासि, ततो भणामि शरीरी मुक्तश्चेति विरुद्धमिति ।

---

१. 'र्थीर्थक' क. ख. पाठः. २. 'ल्प्य', ३. 'सर्वज्ञेश्वरोदि' ख. पाठः. ४. 'लसं' ख. ग. पाठः.

**कापालिकः**— (स्वगतम्) अये अश्रद्धाक्षिप्तमनयोरन्तःकरणम् । भवत्वेवं तावत् । (प्रकाशम्) श्रद्धे ! इतस्तावत् ।

(ततः प्रविशति कापालिनीरूपधारिणी श्रद्धा ।)

**करुणा**— सहि ! पेक्ख रजसस्सुदा सद्धा । सा एसा,

विफुल्ळणीलुप्पलळोळलोअणा
नळात्थिमाळाकिदचालुभूसणा ।
णिअम्बपीणत्थणभाळमन्थळा
विहादि पुण्णेन्दुमुही विळासिणी ॥ १७ ॥

**श्रद्धा**— (परिक्रम्य) एसाह्मि । आणवेदु सामी ।

**कापालिकः**— प्रिये ! एनं दुरभिमानिनं भिक्षुं तावद् गृहाण ।

**श्रद्धा**— (भिक्षुमालिङ्गति ।)

**भिक्षुः**— (सानन्दं परिष्वज्य रोमाञ्चमभिनीय जनान्तिकम्) अहो सुखस्पर्शा कापालिनी । तथाहि,

रण्डाः पीनपयोधराः कति मया चण्डानुरागाद् भुज-
द्वन्द्वापीडितपीवरस्तनभरं नो गाढमालिङ्गिताः ।

---

**करुणा** । सखि ! पश्य रजसः सुता श्रद्धा । सैषा ।

विफुल्लनीलोत्पललोललोचना नरास्थिमालाकृतचारुभूषणा ।
नितम्बपीनस्तनभारमन्थरा विभाति पूर्णेन्दुमुखी विलासिनी ॥ १७ ॥

**एषास्मि** । आज्ञापयतु स्वामी ।

न चात्र रण्डानामास्थाभावाद् एवंविधसौख्याभाव[1] इति शङ्कनीयमित्याह— **चण्डेति** । कापालिनी नाम काचन योगिनी वश्याकर्षणादिषु

---

१, 'वं मिथः सौ' ग. पाठः.

बुद्धेभ्यः शतशः शपे मयि पुनः कुत्रापि कापालिनी-
पीनोत्तुङ्गकुचोपगूहनभवः प्राप्तः प्रमोदोदयः ॥ १८ ॥

अहो पुण्यं कापालिकचरितम् । अहो श्लाघ्यः सोमसिद्धान्तः । आश्चर्योऽयं धर्मः । भो महाभाग ! सर्वथा बुद्धानुशासनमस्माभिरुत्सृष्टम् । प्रविष्टाः स्मः पारमेश्वरं सिद्धान्तम् । तदाचार्यस्त्वं, शिष्योऽहम् । प्रवेशय मां पारमेश्वरीं दीक्षाम् ।

**क्षपणकः** — अळे भिक्खुअ ! कावाळिणीफळसणेण दूसिदो तुमम् । ता दूळं अपसळ ।

**भिक्षुः** — आः पाप ! वञ्चितोऽसि कापालिन्याः परिरम्भमहोत्सवेन ।

**कापालिकः** — प्रिये ! क्षपणकं गृहाण ।

(कापालिनी क्षपणकमालिङ्गति ।)

**क्षपणकः** — (सरोमाञ्चम्) अहो अरिहन्त ! अहो अरिहन्त ! कावाळिणीए फळससुहं । अइ सुन्दाळि ! देदु देदु दाव पुणो पुणो अङ्कपाळिं । (स्वगतम्) अरे महन्तो खु

---

प्रसिद्धप्रभावा । इतः पूर्वं एवंविधसौख्यं नानुभूतमित्यत्र मे शपनमेव शरणमित्याह — बुद्धेभ्य इति ॥ १८ ॥

क्षपणकः । अरे भिक्षुक ! कापालिनीस्पर्शनेन दूषितस्त्वम् । तस्माद् दूरं अपसर ।

वञ्चितोऽसीति । अविदितकापालिनीसुरतारम्भपरिरम्भपरमसुखस्त्वमित्यर्थः ।

अहो आर्हत ! अहो आर्हत ! कापालिन्याः स्पर्शसुखम् । अये सुन्दरि ! ददातु ददातु तावत् पुनः पुनरङ्कपालीम् । अरे महान् खल्वि-

---

१. 'पालिकञ्च' ग. पाठः. २. 'भ्रम प' क. पाठः.

इन्दिअविआळो संवुत्तो। ता किं एत्थ जुत्तं। भोदु। पिच्छिआए ढकिस्सं। (तथा कृत्वा)

अइ पीणघणत्थणसोहिणि!
पळितत्थकुळङ्गविळोळळोअणे!।
जइ ळमअसि कावाळिणि! ता
किं कळिस्सदि सावकी (?) ॥ १९ ॥

अहो कावाळिअं जेव्व एक्कं दंसणं सोक्खमोक्खसाहणं। भो आचाळिअ! अहं तुह दासो संवुत्तो। मं पि महाभैळवानुशासणे दिक्खेदु।

**कापालिकः** — उपविश्यताम्।

(उभौ तथा कुरुतः।)

**कापालिकः** — (भाजनं समादाय ध्यानं नाटयति।)

---

न्द्रियविकारः संवृत्तः। तस्मात् किमत्र युक्तम्। भवतु। पिञ्छिकया स्थगयिष्ये।

अयि पीनघनस्तनशोभिनि[1]! परित्रस्तकुरङ्गविलोललोचने[2]!।
यदि रमयसि कापालिनि! तत् किं करिष्यति श्रावकी ॥ १९ ॥

उपासिकायोषित् श्रावकी। तया मे कृत्यं नास्तीत्यर्थः। कृतार्थो भवामीति पाठान्तरम्॥ १९ ॥

अहो कापालिकमेवैकं दर्शनं सौख्यमोक्षसाधनम्। भो आचार्य! अहं तव दासः संवृत्तः। मामपि महाभैरवानुशासने दीक्षयतु।

उच्छिष्टभक्षणस्य प्रधानाङ्गत्वात्[3] तत् प्रथमं दातव्यमित्यभिप्रायेण भाजनं पानपात्रं संगृह्य। ध्यानानाटनं तु एवं प्रभावसम्पादितं मैरेयमिति विश्वासार्थम्।

---

१. 'नि त्र', २. 'ङ्गलोच' ख. पाठः. ३. 'त् प्र' ग. पाठः.

**श्रद्धा** — भअवं! पळिपूळिअं सुळाए भाअणम्।

**कापालिकः** — (पीत्वा शेषं भिक्षुक्षपणकयोरर्पयति।)

इदं पवित्रममृतं पीयतां भवभेषजम्।
पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥ २० ॥

(उभौ विमृशतः।)

**क्षपणकः** — अह्माणं अळिहन्ताणुशासणे सुळापाणं णत्थि।

**भिक्षुः** — कथं कापालिकोच्छिष्टां सुरां पास्यामि।

**कापालिकः** — (किञ्चिद् विमृश्य) किं विमृशसि श्रद्धे! पशुत्वमनयोर्नाद्याप्यपनीयते। तेनास्मद्वदनसंसर्गदुष्टामपवित्रां सुरामेतौ मन्येते। तद् भवती स्ववक्त्रासवपूतां कृत्वानयोरुपनयतु। यतस्तैर्थिका अपि वदन्ति — 'स्त्रीमुखं तु सदा शुचि' इति।

---

अधुना ध्यानव्यग्रचेतस्तया परिपूर्तिं न जानात्ययमिति मन्वाना ब्रवीति — श्रद्धा। भगवन्! परिपूरितं सुरया भाजनमिति।

पाशपाशिताः प्राणिनः पशवः भैरवेण भगवता भर्गेण भाषितत्वाद् भवेदेतत् सुश्रद्धेयमित्याशयः ॥ २० ॥

क्षपणकः। अस्माकमार्हतानुशासने सुरापानं नास्ति।

पशुत्वं नामामृतोपमा नित्यशुद्धापि मदिरा अनेन पीतशेषोच्छिष्टेति मिथ्याज्ञानम्। तत् स्वमुखसम्बन्धसंस्कारसंस्कृतां कृत्वा निवर्तयेत्यर्थः। स्त्रीमुखं तु नित्यशुद्धमित्यत्र शास्त्रकारसम्प्रतिपत्तिमाह — यत इति। उक्तं च —

"नित्यमास्यं शुचि स्त्रीणां शकुनिः फलशातने।
प्रस्रवे तु शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥"

इति।

---

१. 'ताः प' ग. पाठः.

**श्रद्धा** — जं भअवं आणवेदि। (इति पानपात्रं गृहीत्वा पीतशेषमुपनयति।)

**भिक्षुः** — महान् प्रसादः। (इति चषकं गृहीत्वा पिबति।) अहो सुरायाः सौन्दर्यम्।

निपीता वेश्याभिः सह न कति वारान् सुवदना-
मुखोच्छिष्टास्माभिः सरसमदिरामोदमधुरा।
कपालिन्या वक्त्रासवसुरभिमेतां तु मदिरा-
मलब्ध्वा जानीमः स्पृहयति सुधायै सुरगणः॥ २१॥

**क्षपणकः** — अळे भिक्खुअ! मा सव्वं पिब। कावाळिणीवअणोच्छिट्टं मइळं मह वि धाळएदु।

**भिक्षुः** — (क्षपणकाय चषकमुपनयति।)

**क्षपणकः** — (पीत्वा) अहो सुळाए महुळत्तणम्। अहो सादो। अहो गन्धो। अहो सुळहित्तणम्। चिळं खु अळिहन्ताणुसासणे पडिदो वञ्चिदोह्मि एदिसेण सुळाळसेण। अळे भिक्खुअ! घोणन्ति मे अङ्गाइं। ता उवविशह्म।

**भिक्षुः** — एवं कुर्वः।

(तथा कुरुतः।)

---

श्रद्धा यद् भगवानाज्ञापयतीति।

क्षपणकः। अरे भिक्षुक! मा सर्वं पिब। कापालिनीवदनोच्छिष्टां मदिरां ममापि धारयतु।

अहो सुराया मधुरत्वम्। अहो स्वादः, अहो गन्धः, अहो सुरभित्वम्। चिरं खल्वार्हतानुशासने पतितो वञ्चितोऽस्मि ईदृशेन सुरारसेन। अरे भिक्षुक! घूर्णन्ति मेऽङ्गानि। तस्मादुपविशा(मि? वः)।

---

१. 'दापय' ग. पाठः.

**कापालिकः**—प्रिये! अमूल्यक्रीतं दासद्वयं लब्धम्। तन्नृत्यावस्तावत्।

(उभौ नृत्यतः।)

**क्षपणकः**—अळे भिक्खुअ! एसो कावाळिओ, अहो पमादो, आचाळिओ कावाळिणीए सद्धं सोहणं णच्चेदि। ता एदाए सद्धं अह्मेवि णच्चह्म।

**भिक्षुः**—आचार्य! महाश्चर्यमेतद्दर्शनम्। यत्राक्लेशमभिमतार्थसिद्धयः सम्पद्यन्ते।

(मदस्खलितं नृत्यतः।)

**क्षपणकः**—'अयि पीणघणत्थणि (इत्यादि गायति।)

**कापालिकः**—कियदेतदाश्चर्यम्। पश्य,

यत्रानुज्झितवाञ्छितार्थविषयासङ्गेऽपि सिध्यन्त्यमूः
प्रत्यासन्नमहोदयप्रणयिनामष्टौ महासिद्धयः।

---

अरे भिक्षुक! एष कापालिकः अहो प्रमादः, आचार्यः कापालिन्या सार्धं शोभनं नृत्यति। तस्मादेताभ्यां सहावामपि नृत्यावः।

**अयि** पीनघनस्तनीत्यादि।

**कियदेतदाश्चर्यमिति**। अल्पं स्वल्पमित्यर्थः।

आश्चर्यान्तरमपि पश्येत्याह—**यत्रेति**। यस्मिन् कापालिके दर्शने। अनुज्झितोऽपरिहृतः[1] वाञ्छितार्थस्त्र्यादिलक्षणः स एव विषयः तत्रासङ्गे सत्यपीत्यर्थः। अमूः महासिद्धयः सिध्यन्तीत्यन्वयः। कथंभूतानामित्याह—प्रत्यासन्नेति। निकटवर्तिकल्याणतराविभूत्याकांक्षिणां[2] सुकृतिनामित्यर्थः। महासिद्धयो अणिमागरिमादयः। वश्यमाभिमुख्यकरणम्। आकर्षणं दूरा-

---

१. 'तो वा', २. 'णगुणतर' ग. पाठः.

वश्याकर्षणमोहनप्रमथनप्रक्षोभणोच्चाटन-
प्रायाः प्राकृतसिद्धयस्तु विदुषां योगान्तरायाः परम् ॥२२॥

**क्षपणकः**—अळे कापाळिअ! (विमृश्य) अहव आचाळिअळाअ! कुळाचाळिअ! ।

**भिक्षुः**—(विहस्य) अयमनभ्यासातिशयपीतया मदिरया दूरमुन्मत्तीकृतस्तपस्वी । तत् क्रियतामस्य मदापनयनम् ।

**कापालिकः**—एवं भवतु । (इति स्वमुखोच्छिष्टं ताम्बूलं क्षपणकाय ददाति ।)

**क्षपणकः**—(संज्ञां लब्ध्वा क्षणं स्वस्थीभूय) आचाळिअं एव्व एदं पुच्छिस्सं । जादिसी तुह सुळाए आहळणसत्ती, किं तादिसी इत्थिआपुळिसेसु वि अत्थि ।

**कापालिकः**—किं विशेषेण पृच्छयते । पश्य,

विद्याधरीं वाथ सुराङ्गनां वा
नागाङ्गनां वाप्यथ यक्षकन्याम् ।

---

दन्तिकानयनम् । मोहनं मौढ्यापादनम् । प्रमथनं विनाशनम् । प्रक्षोभणं प्रविचालनम् । उच्चाटनमुत्साह्य परित्यागः । प्रायाः एवमाद्याः । प्राकृतसिद्धयः सांसारिकफला एता अयत्नसाध्या इत्यर्थः । अन्तरायाः प्रत्यूहाः । अस्मिन् दर्शने स्वरसचारानुसारेणैवाखिलपुरुषार्थसिद्धिरिति भावः ॥ २२ ॥

**क्षपणकः** । अरे कापालिक ! अथवाचार्यराज! कुलाचार्य!

**तपस्वी** वराकः ।

**क्षपणकः** । आचार्यमेवैतत् पृच्छामि । यादृशी तव सुराया आहरणशक्तिः, किं तादृशी स्त्रीपुरुषेष्वप्यस्ति ।

यद्यन्ममेष्टं भुवनत्रयेऽपि
विद्याबलात् तत्तदुपाहरामि ॥ २३ ॥

**क्षपणकः**—भो! एदं मए गणिदेण ण्णादं, जं सव्वे अह्मे महाळाअमहामोहस्स किंकळे त्ति।

**उभौ**—यथा ज्ञातमायुष्मता, एवमेतत्।

**क्षपणकः**—ता ळाअकज्जं मन्तीयदु।

**कापालिकः**—किं तत्।

**क्षपणकः**—सत्तस्स सुदा सद्धा महाळाअस्स अण्णाए आहळणीएत्ति।

**कापालिकः**—कथय क्वासौ दास्याः पुत्री। एष तामचिरमेव विद्याबलादुपाहरामि।

**क्षपणकः**—(खण्डिनीमादाय गणयति।)

**शान्तिः**—सखि! अम्बामुद्दिश्यैव हताशानामालापः। तदवधानेन तावदाकर्णयावः।

**करुणा**—(क) सहि! एव्वं करेह्म।

(उभे तथा कुरुतः।)

**क्षपणकः**—(गाथां गणयित्वा)

---

(क) सखि! एवं कुर्वः।

---

**क्षपणकः**। भो! एतद् मया गणितेन ज्ञातं, यत् सर्वे वयं महाराजमहामोहस्य किंकरा इति।

**तस्माद्** राजकार्यं मन्त्र्यताम्।

**सत्त्वस्य** सुता श्रद्धा महाराजस्याज्ञया आहरणीयेति।

**खण्डिनी** वराटकप्रक्षेपसंपुटिका[1]।

---

१. 'संपुटिकापात्रम्' क. पाठः.

णत्थि जळे णत्थि वणे णत्थि गिळिबिळेसु णत्थि पाआळे।
सा विण्णुभत्तिसहिदा णिवसइ हिअए महप्पाणम्॥ २४॥

करुणा — (सानन्दम्) सहि! दिट्ठिआ वड्ढसि। सुदं विण्णुभत्तीए देवीए पासवट्टिणी सद्धेत्ति।

शान्तिः— (हर्षं नाटयति।)

भिक्षुः— अथ धर्मस्य कामादपक्रान्तस्य कुत्र वृत्तिः।

क्षपणकः — (पुनर्गणयित्वा)

(क)णत्थि जळे णत्थि वणे णत्थि गिळिबिळेसु णत्थि पाआळे।
सो विण्णुभत्तिसहिदो वत्तइ हिअए महप्पाणम्॥ २५॥

कापालिकः — (सविषादम्) अहो महत् कष्टमापतितं महाराजस्य। तथाहि —

(क) नास्ति जले नास्ति वने नास्ति गिरिबिलेषु नास्ति पाताले।
स विष्णुभक्तिसहितो वर्तते हृदये महात्मनाम्॥ २५॥

---

नास्ति जले नास्ति वने नास्ति गिरिबिलेषु नास्ति पाताले।
सा विष्णुभक्तिसहिता निवसति हृदये महात्मनाम्॥

अत्र महात्मानोऽक्षुद्रबुद्धयः विहितानुष्ठातारः॥ २४॥

सखि! दिष्ट्या वर्धसे। श्रुतं विष्णुभक्त्या देव्याः पार्श्ववर्तिनी श्रद्धेति।

हन्त तर्हि धर्मोऽपि नूनं न कामानुगतो भविष्यतीत्याकुलाशयः पृच्छति — अथ धर्मस्येति।

सोऽपि काम्यप्रतिषिद्धपरित्यागेन महात्मभिरेव सम्पाद्यमानस्तदाशयवैशारद्यमापाद्य प्रत्यक्प्रावण्यं कुर्वन् अत्रैव वर्तत इत्याह — नास्तीति[1]॥ २५॥

विषादो नाम कर्तव्यकरणानलम्पटत्वम्[2]। उक्तं च —
"कार्याक्षमत्वं चित्तस्य विषादो दुःखपीडनात्।"
इति।

---

१. 'स्तीत्यादि पठति' क. पाठः. २. 'णानलम्पटुत्व' ख. घ. पाठः.

मूलं देवी सिद्धये विष्णुभक्ति-
स्तां च श्रद्धानुव्रता सत्त्वकन्या ।
कामान्मुक्तस्तत्र धर्मोऽप्यभूच्चेत्
सिद्धं मन्ये तद् विवेकस्य साध्यम् ॥ २६ ॥

तथापि तावदसुव्ययेनापि स्वामिनः प्रयोजनमनुष्ठेयम् । तन्महाभैरवीं विद्यां धर्मश्रद्धयोराहरणाय प्रस्थापयामः ।

(इति निष्क्रान्ताः ।)

---

मूलम् अन्यनिरपेक्षं कारणम् । विष्णुभक्तिरिति वर्णाश्रमप्रयुक्तविहितानुष्ठानम् ।

"भक्तिर्भजनमित्युक्ता वाङ्मनःकायकर्मभिः ।"

इति वचनाद् निरतिशयस्नेहबहुमानपूर्वकं सर्वप्रकारभजनम् । अथवा 'समत्वमाराधनमच्युतस्य' 'ज्ञानी त्वात्मैव मे मतमि'ति वचनाद् आत्मनोऽनन्यबुद्ध्येश्वरे चेतःसमर्पणरूपा सम्यग्दर्शनलक्षणा विष्णुभक्तिरिति । अथवा 'मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत् पश्यति शृणोति स्पृशति वा सर्व एव भगवान् वासुदेवः इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः' इत्युक्तलक्षणा विष्णुभक्तिः । अनुव्रता अनुगता श्रद्धा आस्तिक्यबुद्धया विश्वासिता । पाषण्डश्रद्धां व्यावर्तयति — सत्त्वकन्येति । कामान्मुक्त[3] इति । काम्यकर्मणः प्रतिबन्धकत्वात् तद्व्यतिरेकेणेत्यर्थः । सिद्धं निष्पन्नम् । साध्यं नामाविद्यातत्कार्यलक्षणसंसारानर्थनिवृत्तिः, निरतिशयानन्दाविर्भावश्चेति ॥ २६ ॥

नन्वशक्यप्रतीकार एवायमर्थः, तथापि भृत्येन प्राणविनियोगेनापि परिरक्षणीय एवाँपद्गतः स्वामीति सन्तः समुशन्ति तदस्माभिरपि तथा कार्यमित्यभिप्रायेणाह — तथापीति । क्षपणकशाक्ययोरसत्तर्काभासशरणत्वाद् भैरव्यास्तु विद्याया मायाविधानपटीयस्त्वात् सैव प्रेषितेत्यर्थः ।

---

१. 'साम्यद' ख. पाठः. २. 'णा । अ', ३. 'मो' ग. पाठः. ४. 'व कष्टां दशां प्रपन्नः स्वा' क. ख. पाठः.

शान्तिः—आवामप्येवं हताशानां व्यवसायं देव्यै विष्णुभक्त्यै निवेदयावः ।

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीकृष्णमिश्रयतिविरचिते प्रबोधचन्द्रोदये
तृतीयोऽङ्कः ॥

---

आवामपीति । हताशानां मोघाशानां दैवहीनानाम् । केवलमोहरूपभैरवीविचित्रविप्रलम्भाविडम्बनामूलच्छेदाय विष्णुभक्तिरेव परं प्रगल्भते भगवतीत्याभिप्रायेण तस्यै निवेदनं क्रियत इत्यर्थः ॥

इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृतभगवता कृते नाटकाभरणे
तृतीयोऽङ्कः ॥

# अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति मैत्री ।)

मैत्री — सुदं मए मुदिआसआसादो जं महाभैरवी कड्ढणसम्भमादो भअवदीए विण्णुभत्तीए परित्तादा पिअ-

---

## अथ चतुर्थोऽङ्कः ।

एवं तावद् बालगोष्ठीवदत्यन्तासारतयापहेयत्वेन पाषण्डविडम्बना पूर्वपक्षत्वेनोपक्षिप्ता । अतीताङ्कावसाने च महामोहसाम्राज्यसम्पादनाय महाभैरवी सरभसं प्रेषितेत्यभाणि । अथेदानीं तथाप्रवृत्तभैरवीसरभसव्यामोहसम्भ्रमतः कथमपि भगवत्या विष्णुभक्त्या श्रद्धा संरक्षितेति किंवदन्तीमात्रश्रवणात् तद्वृत्तान्तविविदिषया कथङ्कारं खल्वित्याकुलाशया मैत्री प्रवर्तत इत्येतदाह — ततः प्रविशति मैत्रीत्यादिना । अथवा मुख्योऽधिकारी विचाराय प्रवर्तत इत्यभाणि । तत्रैकोऽपि बहुधा तेनेत्यादिना स्वरूपं पर्यालोचितवान् । तत्र पुनः किं मानमित्याकाङ्क्षायामुपनिषद्देव्या सङ्गमो भवेदित्यादिना वेदान्तवाक्यानां तत्र सम्यगन्वयमपि विचारितवान् । पुनश्च डम्भादिप्रतिबन्धकप्रदर्शनेन उक्तसमन्वयविरोधमुद्भाव्य यदि सैव श्रद्धेत्यादिना पर्यहार्षीत् । तृतीयेन चाङ्केनार्हतादिदर्शनविरोधमुद्भाव्य मूलं देवीत्यादिना अविरोधः सम्भावितः । एवं प्रथमेनाङ्केन स्वरूपसमन्वयविचारमुपपाद्य द्वितीयतृतीयाभ्यां विरोधसम्भावनां चोपपाद्य उपसञ्जहार । अधुना तु साधनाधीनां खलु फलप्राप्तिरिति न्यायात् तत्प्राप्तिसाधनं किमित्यपेक्षायां चतुर्थपञ्चमाभ्यामुच्चावचस्वरूपसाधनं निरूपयति — ततः प्रविशतीत्यादिना । मित्रं सुहृद् । तद्भावो मैत्री ।

श्रुतं मया मुदितासकाशाद् यन्महाभैरवीकर्षणसम्भ्रमतो भगवत्या विष्णुभक्त्या परित्राता प्रियसखी श्रद्धेति । तस्मादुत्कण्ठितेन हृदयेन प्रियसखीं प्रेक्षिष्ये । उत्कण्ठा उत्कलिका । उक्तं च —

---

१. 'प्रगोष्ठी', २. 'भासत' ख. पाठः. ३. 'छादयः परित्राता' ख, ग, घ. पाठः. ४. 'ना साध्यफ' ग. पाठः, ५. 'त्याकाङ्क्षायां' क. ख. पाठः.

**सही सद्देति। ता उक्कण्ठिएण हिअएण पियसहीं पेक्खिस्सम्।** (परिक्रामति।)

(ततः प्रविशति श्रद्धा।)

**श्रद्धा** — (सभयोत्कम्पम्)

घोरां नारकपालकुण्डलवतीं विद्युच्छटा दृष्टिभि-
मुञ्चन्तीं विकरालमूर्त्तिमनलज्वालापिशङ्गैः कचैः।
दंष्ट्राचन्द्रकलाङ्कुरान्तरवलज्जिह्वां महाभैरवीं
पश्यन्त्या इव मे मनः कदलिकेवाद्याप्यहो वेपते॥ १॥

**मैत्री** — (स्वगतम्) अए! एसा मे पिअसही भअसंभान्तहिअआकलिदकम्पतरळेहिं अङ्गेहिं किं वि मन्तअन्ती

---

"अलब्धविषये रागे वेदना महती तु या।
संशोषणी च गात्राणां तामुत्कण्ठां विदुर्बुधाः॥"

इति।

एवं प्रियसखीप्रेक्षणप्रवर्धमानोत्कण्ठा मैत्रीत्युक्तम्। इदानीं विष्णुभक्तेः सन्देशं गृहीत्वा विवेकाय निवेदयितुं प्रवृत्तायाः श्रद्धाया व्यापारः प्रदर्श्यते **ततः प्रविशति श्रद्धे**त्यादिना।

**घोरां** त्रासजननीम् नारेति। नरशिरःकपालकृतकुण्डलेत्यर्थः। विद्युच्छटाः शतह्रदासंहतयः ता दृष्टिभिर्मुञ्चन्तीं विसृजन्तीं विकरालमूर्तिं भयानकविग्रहाम्। उक्तविशेषणकचैः सहिताम्। कदलिका गजराजाविरोपिता वैजयन्ती, रम्भा वा। अद्यापीति। विष्णुभक्त्या पूर्वमेव सुदृढं संरक्षितैवाहं, तथापि कम्पत इत्यर्थः॥ १॥

**मैत्री** — अये! एषा मे प्रियसखी भयसम्भ्रान्तहृदयाकलितकम्पतरलैरङ्गैः किमपि मन्त्रयन्ती सम्मुखागतामपि मां न लक्षयति। अतिकष्टतरासज्जनसमवायः खल्वशेषनरकनिदानमिति निरूपयन्ती पूर्वानुभूत-

---

१. 'नवकनककपिशैः केशैः स' इ पाठः

संमुहाअदं वि मं ण ठक्खेदि। आळबिस्सं दाव। (प्रकाशम्) पिअसहि! सद्धे! कीस तुमं उत्ताविअहिअआ मं वि ण आळोएसि।

श्रद्धा — (विलोक्य सोच्छ्वासम्) अये! प्रियसखी मैत्री।

कालरात्रिकरालस्य दन्तान्तर्गतया मया।
दृष्टासि सखि! सैव त्वं पुनरत्रैव जन्मनि ॥ २ ॥

तदेहि परिष्वजस्व माम्।

मैत्री — (तथा कृत्वा) सहि! तह विण्णुभत्थिणिब्भत्थिदप्पभावाए महाभैरवीए कड्ढणसम्भमादो अज्ज वि वेवन्दि दे अङ्गाइ।

श्रद्धा — (घोरामित्यादि पठति।)

---

भयवेगबलेनेष्टतमामपि मामभिमुखमागतां पश्यन्त्यपि न पश्यतीत्यर्थः। इयं तावदनुभूतभूरिदुःखवेदनया प्रम्लानतरतनुलतिकेव लक्ष्यते। तस्मादहमेव पूर्वमालपिष्ये इत्यभिप्रायेणाह मैत्री — आलपिष्ये तावदिति। प्रियसखि। श्रद्धे! कस्मात् त्वमुत्तापितहृदया मामपि नालोकयसि।

कालरात्रिरिति महाभैरवी भण्यते। सैव त्वमिति श्रद्धामैत्र्योरौत्सर्गिकं हि सदा साहचर्यमित्यसूसुचत्। अत्रैव जन्मनीति पञ्चत्वकल्पातिघोरतरापद्गतानामसम्भाव्यमानमपि प्राप्तं विधिवशादिति भावः॥ २॥

अचिन्तितेष्टप्राप्तावधिकतराह्लाद(को?कं)[1] भवत्युपगूहनमिति मन्वाना प्राह — तदेहीत्यादिना।

मैत्री। सखि! तथा विष्णुभक्तिनिर्भर्त्सितप्रभावाया महाभैरव्याः कर्षणसम्भ्रमतोऽद्यापि वेपन्ते तेऽङ्गानि।

---

१. 'तः' ङ. पाठः.

**मैत्री**—(सत्रासम्) अहो हदासा घोळदंसणा। अध ताए आअदाए किं किदं।

**श्रद्धा**—शृणु,

श्येनावपातमवपत्य पदद्वये मा-
मादाय धर्ममपरेण करेण घोरा।
वेगेन सा गगनमुत्पतिता नखाग्र-
कोटिस्फुरत्पिशितपिण्डयुगेव गृध्री॥ ३॥

**मैत्री**—हद्धी हद्धी। (इति मूर्छति।)

**श्रद्धा**—सखि! समाश्वसिहि समाश्वसिहि।

**मैत्री**—(आश्वस्य) तदो तदो।

**श्रद्धा**—ततःपरमस्मदीयार्तनादसञ्जातदयया देव्या विष्णुभक्त्या—

भ्रूभङ्गभीमपरिपाटलदृष्टिपात-
मुद्गाढकोपकुटिलं च तथा व्यलोकि।

---

**मैत्री**। अहो हताशा घोरदर्शना। अथ तयागतया किं कृतम्।

**श्येनावपातमिति** श्रद्धा तदुत्तरमाह। यथा खलु स्वच्छतरजलाशये स्वैरसञ्चारि नीरचरमिथुनमनिरूपितमेवादाय सहसैव कश्चन श्येनो गच्छति, तद्वदभिपत्य अभिप्लुत्य मां धर्मं च गृहीत्वा गता सेत्यर्थः। वेगेनेति। असदृशजनसंसर्गः सहसैव धर्मादिकं तिरयतीति भावः। गृध्री गृध्रभार्या॥ ३॥

**मैत्री**। हा धिक् हा धिक्। ततस्ततः।

**उद्गाढकोपेन** प्रचुरतरक्रोधेन। कुटिलं जिह्मं यथा भवति तथा

---

१. 'दाक्षाय्या' क. ङ. पाठः.

सा वज्रपातहतशैलशिलेव भूमौ
व्याभुग्नजर्जरतरास्थि यथा पपात ॥ ४ ॥

**मैत्री**—दिट्ठिआ मिईव सद्दूळमुहादो पब्भट्ठा सद्धा क्खेमेण संजीविआ पिअसही। तदो तदो।

**श्रद्धा**—ततो देव्या समुपजाताभिनिवेशया कथितमेवमस्य दुरात्मनो महामोहहतकस्य—मामवज्ञाय प्रवर्तमानस्य समूलमुन्मूलनं करिष्यामीति। आदिष्टा चाहं देव्या। यथा-गच्छ श्रद्धे! ब्रूहि विवेकम्। कामक्रोधादीनां निर्जयायोद्योगः क्रियताम्। ततो वैराग्यं प्रादुर्भविष्यति। अहं च यथासमयं

---

व्यलोकि। तथेति अपाङ्गबाणमात्रप्रयोगेणाधर्मशैलः शतधा विदीर्ण इत्यचिन्त्यप्रभावा विष्णुभक्तिरित्यर्थः॥ ४॥

**मैत्री**। दिष्ट्या मृगीव शार्दूलमुखात् प्रभ्रष्टा श्रद्धा क्षेमेण सञ्जीविता प्रियसखी। ततस्ततः।

**एवमस्य दुरात्मन** इति। सकलपुरुषार्थमूलभूतां विष्णुभक्तिमामवधीर्योद्वेलं वर्तमानस्य विवेकमुपनिषदा संयोज्य सम्यग्ज्ञानं सम्पाद्याविद्यालक्षणं मूलं महामोहहतकस्य मिथ्याज्ञानं दुरात्मनो निर्मूलयिष्यामीत्यभिप्रायेणोक्तमित्यर्थः। उद्योग इति। सपरिकरसन्नाहः क्रियतामित्यर्थः। नन्वेतावता कथं कामादिविजय इति चेत्, तत्राह—तत इत्यादिना। अयं भावः—सह प्रमाणयुक्तिभ्यां वस्तुतत्त्वपर्यालोचनरूपविवेकप्रवृत्तौ सत्यां परिपूर्णप्रत्यगात्मवस्तुव्यतिरेकेणोपलभ्यमानस्याविचाररमणीयस्य देहादेरनित्याशुचिदुःखरूपत्वात्,

"अस्थिस्थूणं स्नायुबन्धं मांसशोणितकर्दमम्।
चर्मावनद्धं दुर्गन्धं पूर्णं मूत्रपुरीषयोः॥"

इत्यादिशास्त्रानुसारेण प्रत्यक्षानुभवाच्च विरसबीभत्सतासिद्धेः छर्दितान्नवद्

---

१. 'सहसा वि', २. 'बु' ग. पाठः.

प्राणायामाद्यनुष्ठानेन युष्मत्सैन्यमनुग्रहीष्यामि । ऋतंभरादयश्च देव्यः शान्त्यादिकौशलेनोपनिषद्देव्या सङ्गतस्य भवतः प्रबोधोदयमनुविधास्यन्तीति । तदहमिदानीं विवेकनिकेतं प्रति प्रस्थिता । त्वं पुनः किमाचरन्ती दिवसानतिवाहयसि ।

**मैत्री** — अह्मे वि चतस्सो भइणीओ विण्णुभत्तीए आणाए विवेअसिद्धिकाळणं महप्पाणं हिअए वट्टह्म ।
(संस्कृतमाश्रित्य)

ते हि—

ध्यायन्ति मां सुखिनि दुःखिनि चानुकम्पां
पुण्यक्रियेषु मुदितां कुमतावुपेक्षाम् ।

---

वैतृष्ण्यं जायते । ततश्च शमदमादिद्वारेण पुरुषार्थो भविष्यतीति । अहं च यथासमयमिति । विवेकादिपूर्वकश्रवणादिप्रवृत्तानां युष्माकं सैन्यं वस्तुविचारवैराग्यशमदमादिप्रभृतिभिर्निद्रालस्यादिविक्षेपप्राप्तिसमये प्राणायामादिसम्पादनेनानुग्रहीष्यामीत्यर्थः । ऋतम्भरेति यथाशास्त्रमर्थविज्ञप्तिरुच्यते । आदिशब्देन सत्यम्भरादयो गृह्यन्ते । शास्त्रार्थपरिनिश्चितिः ऋतम्भरा । सैव क्रियमाणा सत्यम्भरा । उक्तं च —

"ऋतं नाम यथाशास्त्रं बुद्धौ तु परिनिश्चितम् ।
प्रयोगस्थं तदेवर्तं सत्यमित्यभिधीयते' ॥"

इति । शान्त्यादिकौशलं नाम शान्तिदान्त्यादिचमत्कारः, तेन । अनुविधास्यन्तीति । अनुकूला भविष्यन्तीत्यर्थः ।

**मैत्री** । वयमपि चतस्रो भगिन्यो विष्णुभक्तेराज्ञया विवेकसिद्धिकारणं महात्मनां हृदये वर्तामहे ।

---

१. 'विवेकक्षे' ग. पाठः.

एवं प्रसादमुपयाति हि रागलोभ-
द्वेषादिदोषकलुषोऽप्ययमन्तरात्मा ॥ ५ ॥

एवं चतस्रोऽपि भगिन्यो वयं तदभ्युदयकारणेनैव वासरान् नयामः। कुत्रेदानीं प्रियसखी महाराजमवलोकयिष्यति ।

**श्रद्धा** — देव्यैवेदमुक्तम्——अस्ति राढाभिधानो जनपदः । तत्र भागीरथीपरिसरालङ्कारभूते चक्रतीर्थे मीमांसानुगतया मत्या कथञ्चिद् धार्यमाणप्राणो व्याकुलेनान्तरा-

---

कथङ्कारं विवेककारणत्वेनोररीकृता यूयं महात्मभिरिति, तदाह— **ते हीति** । सुखिनीति । वसुसुतवसुधादिसम्पत्सान्द्रसुखसमुद्रसमाकुलं सकललोकमालक्ष्य तैः सह सौहृदय्यमेव प्रतिपद्यन्ते, नासूयामित्यर्थः । अथवा सुखिनि वीतरागे । दुःखिनीति । पुत्रक्षेत्रकलत्रादिवियोगनिमित्तदुःखजलधिनिमग्नानालक्ष्य तान् प्रत्यसह्यं वर्तते दुःखमहो कष्टमित्यनुकम्पां कारुण्यमेव प्रतिपद्यन्त इत्यर्थः । उक्तं च —

"अनुकम्पा तु सा ज्ञेया दुःखितान् प्रति देहिनः ।
उपकारपरत्वं या कुरुते चित्तविक्रिया ॥"

अथवा दुःखिनि रागद्वेषवति । पुण्यक्रियेष्विति । साधुकर्मकारिषु सर्वलोकसम्भावितेषु । मुदितां सन्तुष्टाम् । कुमताविति । परोपद्रवादिकुत्सितकर्मकर्तरि अविधेये । उपेक्षा तद्वार्तामपि परिहृत्यौदासीन्येन स्थिति' अथवा तत्पृष्ठीकारेण सत्कथासेवनमुपेक्षा । एवं क्रियमाणे फलमाह—प्रसादमुपयातीति । किं तदि(ति ? त्याह —) अन्तरात्मा मनः रागादिदोषदूषितमपि निर्मलं करिष्यतीत्यर्थः ॥ ५ ॥

**जनपदो** ग्रामः । परिसरस्तीरम् । न्यायादिना श्रुत्यर्थनिर्णयार्था विचारणा मीमांसा । कथञ्चिदिति । रागादिप्रतिबन्धस्य बाहुल्यात् तत्रापि

त्मना विवेक उपनिषद्देव्याः सङ्गमार्थं तपस्यतीति ।

मैत्री— ता गच्छउ पिअसही । अहं वि तण्णिओअं अणुचिट्ठामि ।

श्रद्धा — एवं भवतु ।

(इति निष्क्रान्ते ।)

विष्कम्भकः ॥

(ततः प्रविशति राजा प्रतीहारी च)

राजा—आः पाप! महामोहहतक! सर्वथा हतस्त्वयार्य महाजनः । तथाहि —

---

क्वचित्कत्वेन वर्तत इत्यर्थः । व्याकुलेनेति । धर्माद्यवष्टम्भस्य दुर्बलत्वाच्चञ्चलेन चेतसा सहित इत्यर्थः । एवं मत्या परिपाल्यमानः कथञ्चिदुपनिषत्साङ्गत्यात् तदर्थनिर्णयार्थमालोचनरूपं तपः सम्पादयन् वर्तत इत्यर्थः ।

मैत्री । तस्माद् गच्छतु प्रियसखी । अहमपि तन्नियोगमनुतिष्ठामि ।

एवं तावत् प्रस्तुतविधानाय शमदमादीनुद्योजयाम इत्यत्र महामोहविजयाय शमदमादिभिर्यतनीयमित्यभाणि । अधुना करुणामैत्रीमुदितोपेक्षादिसामग्र्यां सत्यां विवेकः स्वयमेव वर्तत इत्याह—तत इति । अथवा विष्णुभक्तिप्रेषिता समागता श्रद्धेत्युक्तम् । देव्याश्चेन्महाप्रसादस्तर्हि निःश्रेयसाय प्रयत्नः क्रियत एवेति प्रवर्तत इत्याह— तत इति । राजा विवेकः ।

सर्वथेति । वर्णास्तावद् ब्राह्मणादयो मोहपरिगृहीता एव । आश्रमाश्च गृहस्थादयो विशेषधर्मानुष्ठायिनो रागादिभिरुपप्लुता एवानुतिष्ठन्ति । सामान्यधर्मोऽपि दम्भादिभिः क्रियत इत्येवं, सर्वप्रकारेणापि निषूदित इत्यर्थः ।

ननु कथं सर्वप्रकारेणापि हतत्वं यतो महता प्रयासेन भूरिफले

---

१. 'मुपति' ग. पाठः. २. 'श्रमिणश्च' क. घ. ङ. पाठः.

शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावली-
निर्मुक्तेऽमृतसागराम्भसि मनाङ्मग्नोऽपि नाचामति।
निस्सारे मृगतृष्णिकार्णवजले श्रान्तोऽपि मूढः पिब-
त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति॥ ६ ॥

अथवा संसारचक्रवाहकस्य महामोहस्याबोधो मूलम्। तस्य च तत्त्वावबोधादेव निवृत्तिः। यतः—

सम्पाद्यते जनैरिति तत्राह—शान्ते इत्यादिना। शान्ते सर्वोपद्रवरहिते। अनन्तमहिम्नि देशकालवस्तुपरिच्छेदरहिते स्वयं ज्योतिषि। निर्मले अविद्यादिमलरहिते। तरङ्गावलीनिर्मुक्ते बुभुक्षापिपासाशोकमोहजरामरणषडूर्मिविरहिते। नाचामति नोपस्पृशति। नन्वलाभादनास्वादो वर इति चेत् तत्राह—मग्नोऽपीति। अयं भावः—न खल्वस्य निरूप्यमाणे देहादयः स्वरूपं दृश्यत्वाद् घटवत्। स चात्मेहलोकपरलोकसञ्चारी नित्य एष्टव्योऽन्यथा विधिवैयर्थ्यप्रसङ्गात्। तस्य च निरुपाधिकं स्वरूपं पारमेश्वरमेव श्रुतिस्मृतीतिहासपुराणप्रामाण्यात्। अतः परिपूर्णब्रह्मरूपेण वर्तमानोऽपि मनाक् स्वल्पमपि नाचामतीति। नन्वन्यत्रैव पुरुषार्थस्य सुलभत्वादत्रापेक्षाभावान्न प्रवर्तत इति चेत् तत्राह—श्रान्तोऽपीति। सुखलवालिप्साकुलतया सुरनरसूकरादिदेहेष्वनिशमारोहावरोहन्यायेन घटीयन्त्रवदनिशं बम्भ्रम्यमाणोऽलब्धसुखलेशः केवलं परिश्रान्त एवेत्यर्थः। न केवलं पुरुषार्थाप्राप्तिरेव, अपुरुषार्थाभिनिवेशोऽप्यस्तीत्याह—मृगतृष्णिकेति। मूढ इति। सर्वस्यास्य मोह एव मूलमित्यर्थः॥ ६ ॥

अथवा सर्वस्यास्य संसारानर्थस्याविद्यैव मूलं, तां विना मोहवराकोऽयं किं करिष्यति। अतः सैवोच्छेत्तव्या प्रथममित्याह—अथवेत्यादिना। ननु तर्हि यज्ञादिक्रियया साध्य एवायमर्थः, किमिति निगमावसानसेवया सम्यग्ज्ञानसम्पादनप्रयास इत्याशङ्क्याह—तस्य च तत्त्वावबोधादेवेति। न खलु कर्मविद्ययोर्विरोधोऽज्ञस्य कर्माधिकाराद्।

१. 'दनास्वादनम् इ' क. पाठः. २. 'भेदेष्व' क. घ. पाठः.

अमुष्य संसारतरोरबोध-
मूलस्य नोन्मूलविनाशनाय ।
विश्वेश्वराराधनबीजजातात्
तत्त्वावबोधादपरोऽस्त्युपायः ॥ ७ ॥

"प्रायः सुकृतिनामर्थे देवा यान्ति सहायताम् ।"

इति तत्त्वविदो व्याहरन्ति । तथाच देव्या विष्णुभक्त्या समादिष्टम् 'उद्योगः क्रियतां कामादिविजये । तदहमपि

---

ज्ञानाज्ञानयोस्तु तमःप्रकाशवद्विरुद्धस्वभावत्वात् सम्यग्ज्ञानेनैव निवृत्तिरित्येवकारार्थः । उक्तं च —

"कर्मावमार्ष्टि नाज्ञानं तमसीवोत्थितं तमः ।
सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिव ॥"

इति ।

**अबोधमूलस्येति** । अविद्यायां सत्यां संसारोपलम्भादसत्यामनुपलम्भादबोधमूलत्वमित्यर्थः । नापरोऽस्त्युपाय इति । अयं भावः — ईश्वरार्पणबुद्ध्यानुष्ठितपुण्यनिवहैरवदातान्तःकरणानां परमेश्वरप्रसादप्रापितसम्यग्ज्ञानादेवाज्ञाननिवृत्तिः । न पुनः श्रद्धादिरहितानामविष्णुभक्तानामनेकशः श्रुतवेदान्तानामप्यसम्भावनादिप्रतिबन्धबाहुल्यात् तज्ज्ञानं न कार्यक्षमं भवतीति ॥ ७ ॥

ननु तर्हि ईश्वरप्रसाद एव दुःसम्पादः, 'श्रेयांसि बहुविघ्नानी'ति वचनाद् इति चेत्तत्राह—**प्राय** इति । सुकृतिनां भक्तिश्रद्धादिपूर्वकपुण्यकर्मकृताम् । भक्तजनपरवशत्वाद् देवा नाम भक्ताननुजिघृक्षन्त्येवेत्यर्थः । उक्तं च —

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥"

इति । यथा खलु परमेश्वरप्रसादो भवति, तथा विष्णुभक्त्याप्यनुकूल्यमेवावेदितमित्याह — **तथाच देव्येति** । एवं तावद्विष्णुभक्तिबलावष्टम्भेन संसारतरोः सामान्येन निराकरणकारणं ब्रह्मज्ञानमिति निरणायि । इदानीं

---

१. 'शयोरिव विरु' ङ. पाठः. २. 'णं सम्यग्ज्ञान' क. पाठः.

भवदर्थे गृहीतपक्षैवे'ति । तत्र कामस्तावत् वस्तुविचारेणैव जीयते । तद् भवतु । तमेव तावत् तन्निर्जयायादिशामि । वेदवति! आहूयतां वस्तुविचारः ।

**प्रतीहारी** — जं देवो आणवेदि । (इति निष्क्रम्य वस्तुविचारेण सह प्रविशति ।)

**वस्तुविचारः** — अहो निर्विचारसौन्दर्याभिमानसंवर्धिष्णुना कामहतकेन वञ्चितं जगत् । अथवा दुरात्मना महामोहेनैव । तथाहि —

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नम-
त्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥८॥

---

प्रत्येकं कामादिनिवारकं निरूपयति — कामस्तावदित्यादिना । वस्तुविचारो नाम वस्तुतत्त्वसारतानिरूपणम् । अनुभवसाधनवेदप्रमाणसहकृता युक्तिर्वेदवतीत्युच्यते । तया सह वस्तुविचारः प्रवर्तत इति भावः ।

**प्रतीहारी** । यद् देव आज्ञापयतीति ।

वस्तुविचारमेव विशदयति — **अहो निर्विचारेति** । अविचारितरमणीयत्वाभिमानप्रवर्धनशीलेनेत्यर्थः ।

**दृष्ट्वा** । दर्शनेन कर्तव्यं विस्मृत्यात्रैव चित्तं भ्रमतीत्यर्थः । पुनः सल्लापेन मोदते हृष्यति । तदनु परिरम्भणादिना अभिरमते क्रीडति । प्रस्तौति पौनःपुन्येन तदेवारभत इत्यर्थः । ननु विदुषाप्येवं क्रियते[1] चेत् तथैवाभ्युपगम्यतामित्याशङ्क्याह — प्रत्यक्षेति । विद्वत्तापि तेषां तादृश्येवेत्यर्थः । उक्तं च —

---

१. 'ते त' ग. पाठः.

अपिच यथावस्तु विचारयतां मन्दमतीनामपि पिशितपिण्डावनद्धास्थिपञ्जरमयी स्वभावदुर्गन्धबीभत्सवेषा नारीति नास्ति विमतिः । तत्र विस्पष्ट एव तावदितरगुणाध्यासः । तथाहि—

मुक्ताहारलता रणन्मणिमया हैमास्तुलाकोटयो
रागः कुङ्कुमसम्भवः सुरभयः पौष्पा विचित्राः स्रजः ।
वासश्चित्रदुकूलमल्पमतिभिर्नार्यामहो कल्पितं
बाह्यान्तः परिपश्यतां तु निरयं नारीति नाम्ना कृतम् ॥९॥

---

"सुभ्रूः सुनासा सुमुखी सुनेत्रा चारुहासिनी ।
कल्पनामात्रसम्मोहाद्रामेत्यालि(ङ्ग ? ङ्गय)तेऽशुचिः ॥"

इति ॥ ८ ॥

**यथावस्तु विचारयतामिति** । अपरिचितशास्त्राणां प्रत्यक्षमात्रशरणानाम् अल्पबुद्धीनामपि निर्व्याजमन्तर्बहिर्विभागेन नारीतत्त्वं विचारयतां निसर्गदुर्गन्धबीभत्सवेषा योषिदिति (न ? ना)विज्ञातमस्तीत्यर्थः । अध्यासो नामातस्मिंस्तद्बुद्धिः ।

कुतस्त्यास्तर्हि परिदृश्यमाना गुणा इत्यपेक्षायामारोपितगुणस्वरूपमाह —**मुक्तेति** । नार्यामारोपितहारादिषु प्रत्येकं निरूप्यमाणेषु, हारलतास्तावन्मुक्ताफलव्यतिरेकेण न सन्ति । तुलाकोटयः शिञ्जन्मञ्जीरा हेमव्यतिरेकेण न सन्ति । अङ्गरागोऽपि कुङ्कुमव्यतिरेकेण नास्ति । सुरभयो घ्राणतर्पणा गन्धाः सुमनोव्यतिरेकेण न सन्ति । सुप्रसिद्धं च वसनादीनां पृथक्त्वम् । अतः समारोपितमेव केवलमित्यर्थः ' का तर्हि नारी नामेति, तत्राह —निरयमिति । निरयं नरकम् । तत्प्राप्तिनिदानत्वाद् निरयमित्यर्थः ॥ ९ ॥

ननु नारी नाम नवयौवननरनिकरनिर्वृतिनिदानमतः कथं निरयमिति निगद्यते इति कस्यचित् कन्दर्पवटोर्भाषितमिव भावयन्नाह—

---

१. 'चिम्' क. ख. घ. ङ. पाठः. २. 'परामृश्यमा' ग. पाठः.

(आकाशे) आः पाप! कामचण्डाल! किमेवमनालम्बनमेवाविर्भवता भवता व्याकुलीक्रियते महाजनः। तथाह्ययमेवं मन्यते—

बाला मामियमिच्छतीन्दुवदना सानन्दमुद्वीक्षते
नीलेन्दीवरलोचना मम परीरम्भं भृशं वाञ्छति।

अरे मूढ!

का त्वामिच्छति का च पश्यति पशो! मांसास्थिभिर्निर्मिता
नारी वेद न किञ्चिदत्र स पुनः पश्यत्यमूर्तः पुमान्॥१०॥

प्रतीहारी— इदो इदो एदु महाभाओ।

(इत्युभौ परिक्रामतः।)

प्रतीहारी— एसो महाराओ चिट्ठदि। ता उवसप्पदु भवम्।

---

आकाश इति। तं निराचष्टे—आः पापेति। अनालम्बनमिति। विषयसौन्दर्यसम्भावना खल्वनङ्गबलम्। तच्चैवं निःसारमिति निरणायि। अतो निरास्पदेनेत्यर्थः। व्याकुलीकरणमेव दर्शयति—तथाहीति।

सम्प्रति वस्तुविचारकस्यासदाचरणावधीरणां दर्शयति—अरे मूढेति। का त्वामिच्छतीत्यादेरयमर्थः—त्वया खलु शुक्लशोणितसम्भूतमांसास्थिमज्जादिभिर्निर्मितशरीरेन्द्रियसङ्घातरूपं पिण्डं नारीति परिकल्पितम्। तच्च[1] काष्ठलोष्टादितुल्यं न किञ्चिदपि जानात्यतो नैव त्वां वाञ्छतीति। कस्तर्ह्यत्र[2] ज्ञातेति तदाह—स पुनरिति। स इति सर्वनाम्ना प्रसिद्धावद्योतकेन स्वयंप्रकाशसंविद्रूपः परमात्माभिधीयते। अमूर्तः अपरिच्छिन्नः। परिपूर्णः सर्वगतः कूटस्थः चिद्घन एव सन् सर्वसाक्षितया वर्तते इत्यर्थः॥१०॥

प्रतीहारी। इत इत एतु महाभागः। एष महाराजस्तिष्ठति। तस्मादुपसर्पतु भवान्।

---

१. 'तु' क. ख. पाठः. २. 'स्थे' ङ. पाठः.

**वस्तुविचारः**— (उपसृत्य) जयतु जयतु देवः। एष वस्तुविचारः प्रणमति।

**राजा** — इहोपविश्यताम् ।

**वस्तुविचारः**—(उपविश्य) देव! एष ते किङ्करः सम्प्राप्तः। तदाज्ञयानुगृह्यताम् ।

**राजा**—महामोहेन सहास्माकं संप्रवृत्तः सङ्ग्रामः। तदत्र कामस्तस्य प्रथमो वीरः। तस्य च प्रतिवीरतयास्माभिर्भवानेव निरूपितः।

**वस्तुविचारः** — धन्योऽस्मि । येन स्वामिनाहमेवं सम्भावितः ।

**राजा** — अथ कया शास्त्रविद्यया भवान् कामं जेष्यति ।

**वस्तुविचारः** — आः पञ्चशरः कुसुमधन्वा जेतव्य इत्यत्रापि का शस्त्रग्रहणापेक्षा । पश्य,

दृढतरमपिधाय द्वारमारात् कथञ्चित्
स्मरणविपरिवृत्तौ दर्शने योषितां वा।
परिणतिविरसत्वं देहबीभत्सतां वा
प्रतिपदमनुचिन्त्योन्मूलयिष्यामि कामम् ॥ ११ ॥

---

प्रथमो वीरः प्रधानो योद्धा । भवानेवेति । वस्तुविचारेणैव कामोन्मूलनं कर्तुं शक्यत इत्यर्थः ।

द्वारं श्रोत्रादि नव । आरात् दूरादेव । विषयपरिहाण्या दृढतरमपिधाय संयम्येत्यर्थः । कथञ्चिदिति । प्राणायामादिबहुप्रयत्नेन । ननु 'चञ्चलं हि मनः कृष्णे'ति वचनात् सहसा प्रवर्तमानस्य मनसश्चक्षुषो वा कथं निरोध इति शङ्कते — स्मरणेति । स्वैरसञ्चारानुरोधेन शास्त्रार्थानुस्मरणवैपरीत्येन विषय एव प्रवृत्तौ । मनोनिरोधनोपायमाह — परिणतीति । फल-

**राजा**— साधु साधु ।

**वस्तुविचारः**— अपिच,

विपुलपुलिनाः कल्लोलिन्यो निरन्तरनिर्झरी-
मसृणितशिलाः शैलाः सान्द्रद्रुमा वनराजयः ।
यदि शमगिरो वैयासिक्यो बुधैश्च समागमः
क्व पिशितवसामय्यो नार्यस्तदा क्व च मन्मथः ॥ १२॥

नारीति नाम प्रथममस्त्रं कामस्य । तेन तस्यां जितायां तत्सहायाः सर्व एव विफलारम्भा भङ्गमासादयिष्यन्ति । तथाहि—

चन्द्रश्चन्दनमिन्दुधामधवला रात्र्यो द्विरेफावली-
झङ्कारोन्मुखरा विलासविपिनोपान्ता वसन्तोदयः ।
मन्द्रध्वानघनोदयाश्च दिवसा मन्दाः कदम्बानिलाः
शृङ्गारप्रमुखाश्च कामसुहृदो नार्यां जितायां जिताः ॥ १३ ॥

---

कालवैरस्यं नरकपातादिलक्षणम् । योषितां दर्शनेऽपि देहबीभत्सतां प्रतिपदं प्रतिविषयमनुचिन्त्य मूलच्छेदं करोमीत्यर्थः ॥ ११ ॥

**निरन्तरनिर्झरीति** । पतन्निर्झरी स्यन्दमाननिर्झरः । मसृणितं श्लक्ष्णीकृतम् । वैयासिक्यो गिर इति ।

"तमःश्वभ्रनिभं दृष्टं वर्षबुद्बुदसन्निभम् ।
नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम् ॥"

इत्यादिसंसारनिन्दारूपा गृह्यन्ते । यद्येतैः सह समागमस्तदा न कामादिगन्धस्याप्यवकाशः । तस्मादवश्यं सेव्यं सज्जनादिकमित्यर्थः ॥ १२ ॥

**प्रथमम् अस्त्रं** प्रधानास्त्रम् । तस्य कामस्य सहायास्तत्सहायाः सहकारिण इत्यर्थः ।

तानेव दर्शयति—**चन्द्र** इत्यादिना । विपिनोपान्ताः उपवन-

तदलमतिविलम्बेन । आदिशतु स्वामी ।

सोऽहं प्रकीर्णैः परितो विचारैः
शरैरिवोन्मथ्य बलं परेषाम् ।
सैन्यं कुरूणामिव सिन्धुराजं
गाण्डीवधन्वेव निहन्मि कामम् ॥ १४ ॥

**राजा** — तत् सज्जीभवतु भवान् शत्रुविजयाय ।

**वस्तुविचारः** — यदादिशति देवः ।

(इति निष्क्रान्तः ।)

**राजा** — वेदवति ! क्रोधस्य विजयाय क्षमाहूयताम् ।

**प्रतीहारी** — जं देवो आणवेदि ।

(इति निष्क्रम्य क्षमया सह प्रविशति ।)

**क्षमा** —

---

प्रदेशाः । वसन्तोदयो वसन्तारम्भः । मन्द्रं मदकरम् । शृङ्गारप्रमुखाः हेलाविलासबिम्बोकलीलाललितविभ्रमाः ॥ १३ ॥

**परितो विचारैरिति** । कामादिचेष्टया कियत् साध्यते कियद्वा प्रशस्ताचरणेनेति विमृश्य प्रतिषिद्धाचरणं तावद् गुरुतरदुरितोदयहेतुरिति शास्त्रान्निश्चित्य तत्परित्यागेन शास्त्रीयाचरणं कर्तव्यं, तथा कामादीनां स्वरूपमपि निरूप्य निस्सारमिति ज्ञात्वा तत्साधनान्यपि हेयानीत्यवगम्य विहितानिष्ठत्वमेव श्रेयस्करमित्येवमादि परितः समन्तात् प्रवर्तमाननिशिततरविचारशरशतैरित्यर्थः ॥ १४ ॥

**प्रतीहारी** । यद् देव आज्ञापयतीति ।

परेषां परिवादवाक्सायकैः दृढाहतस्यापि स्तिमितसमुद्रवदविकृतत्वं क्षमा ।

क्रोधान्धकारविकटभ्रुकुटीतरङ्ग-
भीमस्य सान्ध्यकिरणारुणघोरदृष्टेः ।
निष्कम्पनिर्मलगभीरपयोधिधीरा
धीराः परस्य परिवादगिरः क्षमन्ते ॥ १५ ॥

(सश्लाघमात्मानं निर्वर्ण्य) अहो, अहम् ,

क्लमो न वाचां शिरसो न शूलं
न चित्ततापो न तनोर्विमर्दः ।
न चापि हिंसादिरनर्थयोगः
श्लाघ्या परं क्रोधजयेऽहमेका ॥ १६ ॥

(इत्युभे परिक्रामतः ।)

**प्रतीहारी** — एसो देवो । उवसप्पदु पिअसही ।

**क्षमा** — (उपसृत्य) जयतु जयतु देवः । एषा देवस्य दासी क्षमा साष्टाङ्गं प्रणमति ।

---

विक्रियाहेतुसम्प्राप्तावविकृतत्वप्रकारमेव धीराणां दर्शयति — **क्रोधान्धकारेति** ॥ १५ ॥

**सश्लाघमिति** । सकलपुरुषार्थसाधनत्वात् क्षमा श्लाघ्या बहुमतियोग्येति भावः । उक्तं च —

"अधरभ्रूविभङ्गेन वक्ति सस्मितमीक्षते ।
स्वौ भुजौ संहतौ येन भावः श्लाघाह्वयः स्मृतः ॥" इति ।

**न चापीति** । क्रुद्धस्य खलु ब्रह्महननपरस्वापहरणादिना इहलोकपरलोकविरोध्यनर्थपरम्परा प्रसरीसर्ति । अतः क्षमा सर्वत्र प्रशस्तेत्यर्थः ॥ १६ ॥

**प्रतीहारी** । एष देवः । उपसर्पतु प्रियसखी ।

**देवस्य दासीति** । क्षमा खलु विवेकिनः सञ्जाघटीति, ततो वि-

---

१. 'मा तु श्ला' ग. पाठः. २. 'तः' ङ. पाठः.

**राजा** — क्षमे ! अत्रोपविश्यताम् ।

**क्षमा** — (उपविश्य) आज्ञापयतु देवः किमर्थमाहूतो दासजनः ।

**राजा** — क्षमे ! अस्मिन् सङ्ग्रामे दुरात्मा क्रोधस्त्वया जेतव्यः ।

**क्षमा** — देवस्याज्ञया महामोहमपि जेतुं पर्याप्तास्मि । किं पुनः क्रोधं तदनुचरमात्रम् । तदहमचिरादेव —

तं पापकारिणमकारणबाधितारं
स्वाध्यायदेवपितृयज्ञतपःक्रियाणाम् ।
क्रोधं स्फुलिङ्गमिव दृष्टिभिरुद्वमन्तं
कात्यायनीव महिषं विनिवार्य हन्मि ॥ १७ ॥

**राजा** — क्षमे ! श्रृणुमस्तावत् क्रोधविजयोपायम् ।

**क्षमा** — देव ! विज्ञापयामि ।

क्रुद्धे स्मेरमुखात्रधीरणमथाविष्टे प्रसादक्रमो
व्याक्रोशे कुशलोक्तिरात्मदुरितोच्छेदोत्सवस्ताडने ।
धिग् जन्तोरजितात्मनोऽस्य महती दैवादुपेता विपद्
दुर्वारेति दयारसार्द्रमनसः क्रोधस्य कुत्रोदयः ॥ १८ ॥

---

वेकाधीनत्वात् क्षमायास्तद्दासीत्वमित्यर्थः ।

अकारणबाधितारं, नरकपातव्यतिरेकेण निष्प्रयोजनचेष्टितम् । विनिवार्य विविधप्रकारैः निरोध्य (हन्मि) निर्मूलयामीत्यर्थः ॥ १७ ॥

विविधं तत्प्रकारमेव दर्शयति — क्रुद्धे इति । आविष्टे उद्रिक्ते । प्रसादक्रमः । हे सौम्य ! समीचीन ! न ते सदृशमेतत्, पितृपितामहादीनां चरितमनुस्मर्तुमर्हसि, धर्ममेवाचर, स्वाध्यायमधीष्व, प्रशान्तो भव-

**राजा**—साधु साधु ।

**क्षमा**—देव! क्रोधस्य विजयादेव तदनुयायिनोऽपि हिंसापारुष्यमानमात्सर्यादयो विजिता एव भविष्यन्ति ।

**राजा**—तत् प्रतिष्ठतां भवती विजयाय ।

**क्षमा**—यदाज्ञापयति देवः ।

(इति निष्क्रान्ता ।)

**राजा**—(प्रतीहारीं प्रति) वेगवति! आहूयतां लोभस्य जेता सन्तोषः ।

**प्रतीहारी**—जं देवो आणवेदि ।

(इति निष्क्रम्य सन्तोषेण सह प्रविशति ।)

**सन्तोषः**—(विचिन्त्य सानुक्रोशम्)

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥ १९ ॥

---

त्यायुक्तिक्रमेण यत्यत इत्यर्थः । व्याक्रोशे परुषवचनप्रवृत्तौ । कुशलोक्तिः कल्याणभाषणम् । दुरितच्छेदोत्सवो नामावश्यं तावत् कर्मफलं भोक्तव्यम् । तदिहैव चेन्महान् लाभ इत्यतिप्रसन्नता । धिग् जन्तोरिति । मदुपद्रवादस्य महत् पापमुपस्थितमित्यनुक्रोशश्च कर्तव्य इत्यर्थः ॥ १८ ॥

मात्सर्यं परगुणासहिष्णुत्वम् । आदिशब्देन पैशुन्यादयो गृह्यन्ते ।

सन्तोषः स्वल्पेनापि प्राप्तेन परितुष्टिः ।

प्रतीहारी । यद्देव आज्ञापयतीति ।

सहन्त इति । अक्लेशलभ्ये फले सत्यपि द्रविणमदान्धानां समाराधनक्लेशैः क्लिश्यन्ते इति कस्य वा दुश्चरितस्य विपाक इति न जानीम इत्यर्थः ॥ १९ ॥

(आकाशे) अरे मूर्ख! दुरुच्छेदः खल्वयं भवतो व्यापारः । तथाहि —

समारम्भा भग्नाः कति कति न वारांस्तव पशोः
पिपासोस्तुच्छेऽस्मिन् द्रविणमृगतृष्णार्णवजले ।
तथापि प्रत्याशा विरमति न ते नापि शतधा
विदीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ २० ॥

इदं च ते लोभान्धस्य चेष्टितं चेतसि चमत्कारमातनोति । यतः —

लप्स्ये लब्धमिदं च लभ्यमधिकं तन्मूललभ्यं ततो
लब्धं चापरमित्यनारतमहो लभ्यं धनं ध्यायसि ।
नैतद्वेत्सि पुनर्भवन्तमचिरादाशापिशाची बलात्
सर्वग्रासमियं ग्रसिष्यति महालोभान्धकारावृतम् ॥ २१ ॥

अपिच —

धनं तावल्लब्धं कथमपि तथाप्यस्य नियतो
व्ययो वा नाशो वा तव सति वियोगोऽस्त्युभयथा ।

---

आकाश इति लोभं लक्षीकृत्य ।

प्रत्याशेति । प्रतिविषयं लब्धव्यमेवेत्याशा अभिलाषो वर्धत इत्यर्थः । नापि शतधेति । सर्वतः समादित्सया व्याकुलीक्रियमाणमपि चेतो न विदीर्णमिति यत् तत् स्फुटं वज्रशिलाकल्पमित्यर्थः ॥ २० ॥

चमत्कारं सध्रीचीनताम् ।

लप्स्ये आगामिनि संवत्सरे । इदं धनं सम्प्रति लब्धम् । द्वित्रदिवसादर्वाक् लभ्यं च किञ्चित् । तन्मूललभ्यमिति । वाणिज्यादिना वर्धयित्वा । पुनरपीत्यनारतमजस्रम् । आशापिशाचीत्यभिलाषानल्पिकातया गृहीतत्वात् तद्द्वारणान्तकः सर्वग्रासमेककबलं निर्दयं ग्रसिष्यतीत्यर्थः ॥ २१ ॥

अनुत्पादः श्रेयान् किमु कथय पथ्योऽथ विलयो
विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥ २२ ॥

किञ्च—

मृत्युर्नृत्यति मूर्ध्नि शश्वदुरगी घोरा जरारूपिणी
त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद् ग्रस्यते ।
धूत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः
सन्तोषामृतसागराम्भसि पुनर्मग्नः सुखं जीवति ॥ २३ ॥

प्रतीहारी—एसो सामी । ता उवसप्पतु महाभाओ ।

सन्तोषः—(तथा कृत्वा) जयतु जयतु स्वामी । एष सन्तोषः प्रणमति ।

राजा—इहोपविश्यताम् (इति स्वसन्निधावुपवेशयति ।)

---

किञ्च इदं तावच्चिन्त्यम् । इह खलु महता प्रयासेन एकं शतं सहस्रमयुतं वा सुवर्णं लब्धम् । तस्य च गृहयात्रायापनार्थं दुर्व्यसनशीलतया वा व्ययः, नाशस्तु राजचोरादिभिरपहारः, नियतो निश्चितः । उभयथापि वियोगस्यावश्यंभावित्वे सति अनुत्पादोऽनार्जनं श्रेयान् वरं किं वा विनष्टिरित्येतदाह—धनं तावदित्यादिना । कस्तर्हि निर्णय इति तत्राह—न त्वनुदय इति । "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायादनार्जनमेव वरमित्यर्थः ॥ २२ ॥

मूर्ध्नि मस्तकरङ्गे स्थित्वान्तको नरीनर्त्ति । परिगृह्यन्त इति परिग्रहा विषयास्तन्मयैः । गृध्रवत् भक्षकत्वाद् गृध्रैः । बोधजलैरिति । ईश्वरप्रसादबहलितशास्त्रश्रवणजनितविवेकविज्ञानजलैः लोभजन्यं रजः तमोमयपरागं प्रक्षाल्य सदा सन्तोषेण भाव्यमित्यर्थः ॥ २३ ॥

प्रतीहारी । एष स्वामी । तस्मादुपसर्पतु महाभागः ।

---

१ 'एता' घ. पाठः.

**सन्तोषः** — (सविनयमुपविश्य) एष प्रेष्यजनः । आज्ञाप्यतां देवेन ।

**राजा** — विदितप्रभावो भवान्, तदलमतिविलम्बेन, लोभं जेतुं वाराणसीं प्रति प्रतिष्ठताम् ।

**सन्तोषः** — यदाज्ञापयति देवः । सोऽहं —

नानामुखं विजयिनं जगतां त्रयाणां
देवद्विजातिवधबन्धनलब्धवृद्धिम् ।
रक्षोधिनाथमिव दाशरथिः प्रसह्य
निर्जित्य लोभमवशं तरसा पिनष्मि ॥ २४ ॥

(इति निष्क्रान्तः ।)

(ततः प्रविशति विनीतवेषः पुरुषः ।)

**पुरुषः** — देव! सम्भृतानि विजयप्रयाणमङ्गलानि । प्रत्यासन्नश्च मौहूर्तिकावेदितः प्रस्थानसमयः ।

**राजा** — यद्येवं सेनाप्रस्थापनायादिश्यन्तां सेनापतयः ।

**पुरुषः** — यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

(नेपथ्ये)

भो भोः सैनिकाः!

---

**प्रेष्यो** नियोज्यः ।

**नानामुखमिति** । इदं मे स्यादिदं मे स्यादिति सर्वतः समादित्साग्रहगृहीतत्वमिति यत् त्रैलोक्यवर्तिप्राणिनां तदिदं लोभस्य विजयित्वमित्यर्थः । देववधो नाम देवतार्थं सङ्कल्पितदीपनिवेद्यादिप्रत्याख्यानं देवस्वापहरणादिर्वा । द्विजातिवधस्तु धनादिग्रहणार्थं स्पष्ट एव । ब्रह्मस्वापहारो वा । एवमादिना लब्धवृद्धिरेव लोभः न तु शंशमीतीत्यर्थः । वृत्तिरिति वा पाठान्तरम् । तदानीं वृत्त्यर्थमेवं क्रियत इत्यर्थः । यथा खलु दाशरथिः सहबलं दशमुखमपीपिषद्, एवं पिनष्मि तं दुरात्मानं मुष्टिप्रहारेण पादाभिहननादिभिः । पिष्ट्वा गतासुं करोमीत्यर्थः ॥ २४ ॥

**सेनापतयः** वस्तुविचारसन्तोषादयः ।

सज्ज्यन्तां कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गाः करीन्द्रा
युज्यन्तां स्यन्दनेषु प्रसभजितमरुच्चण्डवेगास्तुरङ्गाः ।
कुन्तैर्नीलोत्पलानां वनमिव ककुभामन्तराले सृजन्तः
पादाताः संचरन्तु प्रसभमसिलसत्पाणयोऽप्यश्ववाराः ॥

**राजा**—भवतु । कृतमङ्गलाः प्रतिष्ठामहे । (पारिपार्श्वकं प्रति) सारथिरादिश्यतां साङ्ग्रामिकं रथं सज्जीकृत्योपनयेति ॥

**पारिपार्श्वकः**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

(ततः प्रविशति यथोक्तं रथमादाय सारथिः ।)

**सारथिः**—देव! एष सज्जीकृतो रथः । तदारोहत्वायुष्मान् ।

(राजा कृतमङ्गलविधिरधिरोहणं नाटयति ।)

**सारथिः**—(रथवेगं निरूपयन्) आयुष्मन्! पश्य पश्य ।

उद्धूतपांसुपटलानुमितप्रबन्ध-
धावत्खुराग्रचयचुम्बितभूमिभागाः ।
निर्मथ्यमानजलधिध्वनिघोरहेष-
मेते रथं गगनसीम्नि वहन्ति वाहाः ॥ २६ ॥

इयं च नातिदूरे दर्शनपथमवतीर्णा त्रिभुवनपावनी वाराणसी नगरी ।

अमी धारायन्त्रस्खलितजलझात्कारमुखरा
विभाव्यन्ते भूयः शशिकररुचः सौधशिखराः ।
विचित्रा यत्रोच्चैः शरदमलमेघान्तविलस-
त्तडिल्लेखालक्ष्मीं वितरति पताकावलिरियम् ॥ २७ ॥

---

कृतमङ्गलविधिरिति । स्नानशौचाचमनादिपूर्वकसन्ध्योपासनादि-दूर्वालमनदर्पणदर्शनहरिचन्दनालेपनहेमतिलगोदानादिदधिनिरीक्षणालङ्कृतकल्याणतरमङ्गल्यस्त्रीकराग्रविगलितलाजाद्यभिषेचनवलक्ष्मीक्षवक्षःस्पर्शनादिकं कृत्वा रथमधिरोहतीत्यर्थः ।

एताश्च प्रतिमुकुलभ्रमन्मधुपावलीरणितमुखरा जृम्भारम्भविगलन्मकरन्दबिन्दुदुर्दिनाः कुसुमसुरभयो मातिदूरे श्यामायमानघनच्छदच्छायातरवो नगरपर्यन्तारण्यभूमयः । यत्रैते मरुतोऽपि गृहीतपाशुपतव्रता धूलिमुद्धूलयन्तस्तापसा इव लक्ष्यन्ते । तथाहि—

तोयार्द्राः सुरसरितः सिताः परागै-
रर्चन्तश्च्युतकुसुमैरिवेन्दुमौलिम् ।
प्रोद्गीतां मधुपरुतैः स्तुतिं पठन्तो
नृत्यन्ति प्रचलल्लताभुजैः समीराः ॥ २८ ॥

राजा — (सानन्दमालोक्य)

एषान्तर्दधती तमोविघटनादानन्दमात्मप्रभं
चेतः कर्षति चन्द्रचूडवसतिर्विद्येव मुक्तेः पदम् ।
भूमेः कण्ठविलम्बिनीव कुटिला मुक्तावली जाह्नवी
यत्रैवं हसतीव फेनपटलैर्वक्रां कलामैन्दवीम् ॥ २९ ॥

---

झात्कारोऽनुकरणशब्दः । भूयःशब्दोऽत्यर्थार्थः ॥ २७ ॥

जृम्भारम्भः कुसुमविकाससमयः । घनच्छदं निबिडपल्लवम् । पर्यन्तारण्यभूमयः उद्यानभूप्रदेशाः ।

अन्तर्दधतीति । श्रीविश्वेश्वरालङ्कृतप्रासादमणिकर्णिकयोर्मध्यदेशः । तमोविघटनादिति । तमसोऽज्ञानस्य विनाशनेन । आत्मप्रभम् आत्मप्रवणं चेतः कर्षति सम्पादयति । क्षेत्रप्रसादात् प्रत्यक्प्रावण्यादिद्वारेणात्माकारं प्रवर्तते चित्तमित्यर्थः । तत्र दृष्टान्तमाह — विद्येवेति । यथा खलु परदेवतागुरुप्रसादबाहुल्यपरिप्रापिता तत्त्वमस्यादिमहावाक्यश्रवणजनितापरोक्षविद्या कैवल्यमापादयेदेवमेवैषान्तर्दधत्यपि मुक्तिप्रापिकेत्यर्थः । जाह्नवी यत्रैवं हसतीति । सकलभूमण्डलपरिमण्डनभूता भगवती भागीरथी स्वयमुपसृत्य यत् क्षेत्रमलङ्चकार, तन्माहात्म्यं किमु वक्तव्यमिति भावः ॥ २९ ॥

**सूतः**—(परिक्रम्य) आयुष्मन्! पश्य पश्य तदिदं सुरसरित्परिसरालङ्कारभूतं भगवतः पावनमनादेरादिकेशवस्य विष्णोरायतनम्।

**राजा**—(सहर्षम्) अये,

एष देवः पुराविद्भिः क्षेत्रस्यात्मेति गीयते।
अत्र देहं समुत्सृज्य पुण्यभाजो विशन्ति यम्॥ ३०॥

**सूतः**—आयुष्मन्! पश्य पश्य। एते तावत् कामक्रोधलोभादयोऽस्मद्दर्शनमात्रादेवेतो देशाद् दूरमतिक्रामन्ति।

**राजा**—एवमेतत्। तद्भवतु। स्वाभीष्टसिद्धये भगवन्तं नमस्यामः। (रथादवतीर्य प्रविश्यावलोक्य च) जय जय भगवन्! अमरचयचमूचक्रचूडामणिश्रेणिनीराजितोपान्तपाद-

---

एष देवः क्षेत्रस्यात्मेति। श्रीमन्नारायणात्मकं श्रीवाराणसीक्षेत्रमित्यर्थः॥ ३०॥

एवमेतदिति। यथा खलु द्युमण्डलपरिमण्डनभूताखण्डमार्ताण्डमण्डलोद्दण्डविकसद्द्युतिमण्डलसमुदयसमये नक्तञ्चरा न सञ्चरन्ति, एवमेव विवेकविभावसुविभवविभ्रमविलसद्द्युतिनिदग्धाः कामादयः पलायन्त इत्येतन्न चित्रम्। किन्तु उपपन्नमेवेत्यर्थः।

एवं तावदादिकेशवायतनं प्रविष्टो विवेक इत्युक्तम्। इदानीं भूरिभक्तिभारावनमितकन्धरः प्रचुरस्नेहबहुमाननिघ्ननिजहृदयः श्रीमन्नारायणे भगवति परमां भक्तिमुद्वहन् दण्डकस्तोत्रेण संस्तुवन् दण्डवन्निपत्य नमस्कर्तुं प्रक्रमते विवेक इत्याह—जय जयेत्यादिना। अमराणां चयो निकरस्तस्य चमूः सेना तस्याश्चक्रं समूहः तेषां चूडा मौलिः तत्र निमग्नानां मणीनां श्रेणिः पङ्क्तिः तया नीराजितमभिद्योतितमुपान्तं निकटं यस्य पादद्वयस्य तत् पादद्वयमेवाम्भोजवदतिरमणीयत्वादम्भोजं तस्याग्राङ्गुलिषु

द्दयाम्भोजराजन्नखद्योतकिर्मीरितस्वर्णपीठ! स्फुरद्द्वैतविभ्रान्तिसन्तानसन्तापसन्तप्तवन्दारुसंसारनिद्रापहारैकदक्ष! क्षमामण्डलोद्धारसंहारसंघट्टसंघृष्टदंष्ट्राग्रकोटिस्फुरच्छैलचक्र! क्रमाक्रान्तलोकत्रय! प्रबलभुजबलोद्धृतगोवर्धनच्छत्रनिर्वारिता-

---

राजन् दीप्यन्नखानां द्योतो दीप्तिस्तया किर्मीरितं कल्माषितं स्वर्णमयपादपीठं यस्य भगवतः सोऽयं तथोक्तः। अथवा किर्मीरितमित्यस्यान्योऽर्थः। श्रीमन्नारायणपादाम्बुरुहसेवामहोत्सवसमुत्सुकतयाविच्छिन्नसंततधारं सर्वतः समागत्य भक्त्यतिशयेन पाङ्क्तिशः प्रणतविबुधसभाभूषितभूषाभास्वन्मणिप्रभापटलव्यतिषङ्गदोषेण निसर्गभास्वत् स्वर्णमयपादपीठं किर्मीरितं किणीकृतमिव यस्य स तथेति। स्फुरच्च तद् द्वैतं चेति समासः। तत्र स्फुरणं नाम स्वप्नप्रपञ्चप्रतिभासवदेव केवलं द्वैतभानं, न त्वेव द्वैतमिति निरूपणक्षममित्यर्थः। द्वैत(स्य)विभ्रान्तिः परिभ्रमणम् अनादिभवपरम्परावासनाप्रवृत्तजननमरणादिभिः सुरनरसूकरादियोनिभेदेषु अनिशं बम्भ्रम्यमाणत्वम् एवंविधविभ्रान्तेः सन्तानेन पौनःपुन्येन वर्तमानगर्भवासादिदुःखनिवहेन सम्यक्तापेन। सम्यक्ता नाम कदाचिदपि सुखलेशासंस्पर्शः। तेन सन्तप्तानां वन्दारूणां—

> "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन!।
> आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ!॥"

इत्यादिवचनादनेकदुःखव्रातसन्तापेन भगवन्नारायणपादारविन्दवन्दनशीलानां संसारिणां संसार एव निद्रावद् विशेषविज्ञानविरोधित्वाद् निद्रा तस्या अपहारो निरासः तस्मिन्नेकः प्रधानो दक्षः कुशलः यः स भगवांस्तथोक्तः। क्षमा पृथिवी तस्या मण्डलस्योद्धरणे, पुरा खलु हिरण्याक्षेण पातालनिवेशितपृथिवीमण्डलस्योद्धरणे संहारः सम्यगाहरणं दंष्ट्राग्रेण समुत्खायाकूप्योपरि यथापुरं संस्थापनम्। तदानीं सम्यग् घट्टनः सङ्घर्षः (तेन) सम्यग् घृष्टदंष्ट्रायाः अग्रकोट्यां स्फुरत् शोभमानं शैलानां चक्रं निवहो यस्य भगवतः स तथोक्तः। भूरादिक्रमेणाक्रान्तम् उल्लङ्घितं लोकानां त्रयं येन स

---

१. 'यप्र' घ. पाठः. २. 'नैवमि' ग. पाठः.

खण्डलोद्योजिताकाण्डचण्डाम्बुवाहातिवर्षत्रसद्गोकुलत्राणविस्मापिताशेषविश्वप्रभो! विबुधरिपुवधूवर्गसीमन्तसिन्दूरसन्ध्यामयूखच्छटोन्मार्जनोद्दामधामाधिप! त्रस्तदैत्येन्द्रवक्षस्तटीपाटनाकुण्ठभास्वन्नखश्रेणिपाणिद्वयस्रस्तविस्तारिरक्तार्णवामग्नलोकत्रय! त्रिभुवनरिपुकटभोद्दण्डकण्ठास्थिकूटस्फुटोन्मार्जितोदात्तचक्रस्फुरज्ज्योतिरुल्काशतोड्डामरोद्दण्डदोर्दण्ड!

---

तथोक्तः। प्रकर्षेण बलं सारत्वं यस्य भुजस्य स प्रबलभुजः, तस्य बलं सामर्थ्यं बलेनोद्धूतः बलोद्धूतः उद्धूतः उत्पाटितः स च गोवर्धन एव वर्षनिवारकत्वात् छत्रं तेन छत्रेण नितरां वारितम् आखण्डलः पुरुहूतस्तेनोद्योजिताः अवश्यकरणीयमेवन्युच्चैः प्रेरिताः अकाण्डे अकाले चण्डाः क्रूराः अम्बु वहन्तीत्यम्बुवाहाः तेषामत्यर्थं वर्षमतिवर्षं तेन त्रसत् कम्पमानं गवां कुलं समूहः। गोकुलमित्युपलक्षणं व्रजजननिवहस्यापि। तेषां त्राणं रक्षणं तेन विस्मापितं कुतूहलितमशेषं च तद् विश्वं चेत्यशेषविश्वं तस्य प्रभुः स्वामी यो भगवान्नारायणः स तथोक्तः। विबुधा देवाः तेषां रिपवः शत्रवोऽसुराः रिपूणां वधूवर्गः स्त्रीजनः तस्य सीमन्तः[1] केशपद्धति तत्र निहितं सिन्दूररज एव संध्यामयूखवदतिरक्तत्वात् मयूखा रश्मयः, तेषां छटा पुञ्जः तस्योन्मार्जने निरसने उद्दाममुत्कटं धाम तेजस्तस्य अधिपो द्युमणिः तद्वदुक्तविशेषणो यो भगवान् स तथोक्तः। यथा खल्वादित्यः सम्प्रसारयन्नात्मतेजः संध्यारागं तिरयति, एवमेवायं भगवानसुरनिवहनिग्रहेणासुराङ्गनानामेकवेणीत्वसम्पादनेन सीमन्तसीम्नि निहितसिन्दूररेणुं तिरयतीत्यर्थः। त्रस्तो भीतः स चासौ दैत्यानामिन्द्रश्च तस्य वक्षस्तटी उरःस्थलं, तत्पाटने भेदने अकुण्ठानाम् अभुग्नानां, भास्वन्तश्च त नखाश्च तेषां श्रेण्या पङ्क्त्या सहितात् पाणिद्वयात् स्रस्तं स्नुतं च तद्विस्तारि भूरि च रक्तं रुधिरं तदेव अर्णववत् बहुलत्वादर्णवः, तत्र आसम-

---

१. 'न्तः विवृतवेणीविवरालकालङ्कृतालिकावसानप्रदेशः त' ग. ङ. पाठः.

खण्डेन्दुचूडाप्रिय! प्रौढदोर्दर्पविभ्रान्तमन्थाचलक्षुब्धदुग्धाम्बुधिप्रोत्थितश्रीभुजावल्लरीसंश्लेषसंक्रान्तपीनस्तनाभोगपत्रावलीलाञ्छितोरःस्थल! स्थूलमुक्ताफलोत्तारहारप्रभामण्डलप्रस्फुरत्कण्ठ! वैकुण्ठ! भक्तस्य लोकस्य संसारमोहच्छिदं देहि

न्तान्मग्नमाप्लुतं लोकानां त्रयं यस्य स तथोक्तः। त्रिभुवनरिपुश्चासौ कैटभश्च तस्योद्दण्ड उद्धणः कण्ठो गल तत्र स्थितानामस्थ्नां कूटवत् कठिनत्वात् कूटः समूहः तत्र स्फुटोन्मार्जितस्य दृढतर्जितस्योदात्तचक्रस्य उद्धणसुदर्शनस्य स्फुरज्ज्योतिरिव सर्वतः प्रद्योतमानदीप्तिरिव उल्कानामुल्मुकानां शतैः उड्डामरः भयङ्करः उद्दण्डः उद्धणः दोर्दण्डो बाहुदण्डो यस्य भगवतः स तथोक्तः। खण्डेन्दुरर्धेन्दुः चूडा कपर्दः यस्य चूडायां चन्द्रखण्डः स खण्डेन्दुचूडः तस्य प्रिय इष्टः। अथवा खण्डेन्दुचूडः चन्द्रार्धमौलिः प्रियो यस्य स तथोक्तः। प्रकर्षेण ऊढः प्राप्तः दोष्णोर्दर्पो बाहुबलं तेन विभ्रान्तः परिभ्रमितः मन्थाचलो मन्दरपर्वतः तेन क्षुब्धाद् विलोलिताद् दुग्धाम्बुधेः क्षीरसमुद्रात् प्रोत्थितायाः श्रियो भुजा एव वल्लरी पल्लववल्ललितत्वाद् वल्ली तया संश्लेषः स्वयंग्रहदृढपरिष्वङ्गः तदानीं मुद्रामुद्रितप्रतिमुद्रान्यायेन सम्यगाक्रान्तपीवरस्तनयोराभोगः सर्वलक्षणपौष्कल्यं तत्र स्तनाभोगे काश्मीरकस्तूरिकादिगन्धद्रव्यैः पङ्क्तिरूपेण विरचितपत्रावल्या लाञ्छितमुरःस्थलं यस्य स तथोक्तः। लक्ष्म्याः प्रसारितकुड्मलितपुलकितकरपल्लवस्वयंग्रहाश्लेषमयसंक्रान्तस्तनतटविरचितचर्चनाचिह्नितं विशालं वक्षःस्थलं यस्य भगवतः स तथेत्यर्थः। स्थूलमुक्ताफलैरुत्तारस्य उत्कटं दीप्यमानस्य हारस्य प्रभाया मण्डलेन पटलेन प्रकर्षेण स्फुरन् कण्ठो यस्य स तथोक्तः। हे वैकुण्ठ!। भक्तस्य लोकस्य भक्तजनस्य अनन्यशरणस्य जनस्य। जननमरणगर्भवासादिलक्षणः संसार एव मोहः अज्ञानं तस्य छेदनशीलं नाशकस्वभावं देहि प्रयच्छ बोधस्य ज्ञानस्य उदयमुत्पत्तिम्।

१. 'रः परिभ्रमणं सर्वतः परिभ्रमितालातचक्रवज्जाज्वल्यमानदीप्तिनिबर्हेन उद्' ग. ङ. पाठः. २. 'स्य उच्चकैः पृथुतरस्य दी' घ. पाठः

बोधोदयं देव! तुभ्यं नमः। (निर्गमनं नाटयित्वा विलोक्य च) साधुरयमेवास्माकं निवासोचितो देशः। तदत्रैव स्कन्धावारं निवेशयामः।

(इति निष्क्रान्तौ।)।

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि
नाटके विवेकोद्योगो नाम
चतुर्थोऽङ्कः।

---

हे देव! तुभ्यं नमः प्रह्वीभावः सदास्त्वित्यर्थः। स्कन्धावारं सेना[१]निवेशस्थानम्। निवेशयामः कल्पयामः॥

इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृतभगवता कृते
नाटकाभरणे चतुर्थोऽङ्कः।

---

१. 'रं भवमोचनात् से-, २. 'नमिति यावत्' ख. ग. घ. ङ. पाठः.

# अथ पञ्चमोऽङ्कः ।

(*अतःपरं वैराग्योत्पत्तिर्भविष्यति ।)

(ततः प्रविशति श्रद्धा ।)

**श्रद्धा**—(विचिन्त्य) प्रसिद्धः खल्वयं पन्थाः । यतः—

निर्दहति कुलमशेषं ज्ञातीनां वैरसम्भवः क्रोधः ।
वनमिव घनपवनाहततरुवरसङ्घट्टसम्भवो दहनः ॥ १ ॥

---

## अथ पञ्चमोऽङ्कः ।

एवं तावत् करुणामैत्रीमुदितोपेक्षावस्तुविचारादिपरिजनपरिवृतो महामोहविजयाय वाराणसीं प्रविष्टः परमेश्वरानुगृहीतः पुष्कलो विवेक इत्युक्तम् । अधुना तु विवेकसम्पत्त्यनन्तरं लब्धावसरस्य सकलपुरुषार्थसाधनभूतस्य वैराग्यस्योत्पत्तिं वक्तुं प्रक्रमत इत्यङ्कतात्पर्यमाह—**अतः परमिति** । भविष्यतीति प्रयोगान्मध्ये किञ्चिद् वक्तव्यं विद्यत इति भावः ।

पूर्वमेव विवेकमोहयोर्व्यतिकरवृत्तान्तविविदिषया प्रेषिता देव्या विष्णुभक्त्या श्रद्धा । सा पुनर्देवासुरसङ्ग्रामसदृशसमरसमनन्तरं समरभुवमभिवर्तत इत्याह—**ततः प्रविशति श्रद्धेत्यादिना** ।

सङ्ग्रामभुवि पतितं गतासुं जननि ! हं दृष्ट्वातिदुःखिता पुनर्विचिन्त्य दुःखचापलेन किं कृत्यं जनस्वभावः खल्वयमित्यात्मानमाश्वासयन्त्याह—**प्रसिद्धः खल्वित्यादिना** ।

**वैरस्य** सम्भवः उत्पत्तिः । तरुवरयोः सम्यग् घट्टः सङ्घर्षः तस्मात् सम्भवतीति सङ्घट्टसम्भवः । एवं दावदहनवद् दावं वैरदहनोऽपि कुलमखिलं दहतीत्यर्थः ॥ १ ॥

---

* मूले अतःपरं वैराग्योत्पत्तिर्भविष्यति इति वाक्यं पञ्चमाङ्कादावस्तीति व्याख्याग्रन्थेभ्योऽवगम्यते । नेदं कविवचनम् । पात्रमुखेन विना एवं स्वातन्त्र्येण वक्ष्यमाणार्थसूचनसम्प्रदायाभावात् । तत एव तद्व्याख्यापि चिन्त्या । षष्ठाङ्कोपक्रमेऽप्येवमेव द्रष्टव्यम् ।

(सास्रम्) अहो दुर्वारो दारुणः सोदरव्यसनजन्मा शोकानलः। यो विवेकजलधाराशतैरपि न मन्दीक्रियते।

तथाहि —

ध्रुवं ध्वंसो भावी जलनिधिमहीशैलसरिता-
मतो मृत्योः शीर्यत्तृणलघुषु का जन्तुषु कथा।
तथाप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषमो
विवेकप्रोन्माथी दहति हृदयं शोकदहनः॥ २ ॥

येन तथा क्रूरप्रकृतिष्वपि भ्रातृषु कामक्रोधादिषु कथाशेषतां गतेषु,

निकृन्ततीव मर्माणि देहं शोषयतीव मे।
दहतीवान्तरात्मानं क्रूरः शोकाग्निरुच्छिखः॥ ३ ॥

(विचिन्त्य) आदिष्टास्मि देव्या विष्णुभक्त्या। यथा—वत्से! श्रद्धे! अहमत्र हिंसाप्रायसमरदर्शनपराङ्मुखी। तेन वाराणसीमुत्सृज्य सालग्रामाभिधाने भगवतः क्षेत्रे कञ्चित्कालमतिवाहयामि। त्वं तु यथावृत्तं समरवृत्तान्तमागत्य मे

---

ध्रुवं ध्वंस इति। चिरकालस्थायित्वेन सम्मताः खलु शैलादयस्तेषामपि नाशो निश्चितः। अन्यत्र का कथेत्यर्थः। तथापीति। एवं दृष्टबीभत्समपि संसारमन्यथीकृत्य व्यामोहयत्ययं बान्धवाभिमान इत्यर्थः॥२॥

तदेतद् दर्शयति—येन तथा क्रूरेत्यादिना। येन बान्धवाभिमानेन। कथाशेषतां गतेषु वार्तामात्रशरीरेषु।

निकृन्तति छिनत्ति। उच्छिखः उद्वेलं जाज्वल्यमानः॥ ३ ॥

आस्तां तावदियं चिन्ता, देवीनियोगानुसारेण खलु मया यतनीयमिति निरूपयन्त्याह श्रद्धा— विचिन्त्य आदिष्टास्मीत्यादिना।

निवेदयिष्यसीति । तदहं देव्याः सकाशं गत्वा सर्वमेतत् समरवृत्तान्तमावेदयामि । (परिक्रम्यावलोक्य च) इदं तच्चक्रतीर्थम् । यत्रासौ संसारसागरोत्तारतरणिकर्णधारो भगवान् हरिः स्वयं प्रतिवसति । (प्रणम्य) इयं च महामुनिभिरुपास्यमाना भगवती विष्णुभक्तिः शान्त्या सह किमपि मन्त्रयते । यावदुपसर्पामि (इति परिक्रामति ।)

(ततः प्रविशति विष्णुभक्तिः शान्तिश्च ।)

**शान्तिः** — देवि ! प्रबलचिन्ताकुलहृदयामिव भगवतीमालोकयामि ।

**विष्णुभक्तिः**—वत्से ! एतस्मिन् वीरवरक्षये महति साम्पराये न जानामि बलवता महामोहेनाभियुक्तस्य वत्सविवेकस्य कीदृशो वृत्तान्त इति, तेन दुःस्थितामिव मे हृदयम् ।

रजस्तमोभिभूतचित्तानां खलु हिंसारसाभिनिवेशः । केवलसात्त्विकरूपा तु विष्णुभक्तिर्विवेकिभिरुपास्यमाना सालग्रामक्षेत्रे वर्तत इत्यर्थः । इदं तच्चक्रतीर्थमिति । यत्र देव्या निवासाय निरूपितं स्थानं पूर्वं तदुच्यते तदिति। इदमिति प्रत्यक्षतो दृश्यमानं हरिक्षेत्रम् । चक्रतीर्थमिति । सालग्रामक्षेत्रगतगण्डकीसरित्प्रवरपरिसरसान्द्रसलिलसन्दोहाशयस्तटविशेषः चक्रतीर्थमित्युच्यते । कर्णधारो नाविकः । हरिरिति । सालग्रामक्षेत्रवासी स्वामी भजतां पापहरो हरिमूर्तिरुच्यते । यावदुपसर्पामीति । एकान्तमाश्रित्य शान्त्या सह प्रयोजननिरूपणे क्रियमाणेऽपि समरवृत्तान्तमावेदयितुमागता खल्वहं, तस्मादुपसर्पामीत्यर्थः ।

उक्तं तावत् पूर्वं वाराणसीक्षेत्रं प्रविष्टो विवेक इति, विष्णुभक्त्या च नियुक्ता श्रद्धा समरवृत्तान्तः साकल्येनावेद्य इति । अधुना तु विवेकः किं कृतः(?)किं वा करिष्यतीत्याकुलाशया विष्णुभक्तिरित्याह — **ततः प्रविशति विष्णुभक्तिरित्यादिना ।**

**साम्पराये युद्धे । अभियुक्तस्य सम्बद्धस्य ।**

**शान्तिः**— किमत्र विचिन्त्यते । ननु भगवती चेत् कृतानुग्रहा, तन्नियतमेव राज्ञो विवेकस्य विजय इति जानामि ।

**विष्णुभक्तिः**— वत्से!

यद्यप्यभ्युदयः प्रायः प्रमाणादवधार्यते ।
कामं तथापि सुहृदामनिष्टाशङ्कि मानसम् ॥ ४ ॥

विशेषतश्च श्रद्धायाश्चिरमनागमनं मनसि सन्देहमापादयति ।

**श्रद्धा**—(उपसृत्य) भगवति! प्रणमामि ।

**विष्णुभक्तिः**— श्रद्धे! स्वागतम् ।

**श्रद्धा**— देव्याः प्रसादेन ।

**शान्तिः**— अम्ब! प्रणमामि ।

**श्रद्धा**— पुत्रि! मां परिष्वजस्व ।

**शान्तिः**—(तथा करोति ।)

**श्रद्धा**— वत्से! देव्या विष्णुभक्तेः प्रसादान्मुनिजनचेतःपदं प्राप्नुहि ।

---

अभ्युदयः सम्पत् । प्राय इति बाहुल्येनेत्यर्थः । तथाप्यनिष्टाशङ्कि मानसमिति । अपायदर्शी खलु स्नेह इत्यर्थः ॥ ४ ॥

**विशेषतश्च श्रद्धायाश्चिरमिति** । नैतावदेव, अन्यच्चाशङ्काकारणमस्ति । यद्यसौ जीवति मे वत्सस्तर्ह्यसौ श्रद्धा द्रुतमेवास्मत्सकाशमागम्यावेदयिष्यति । तच्च न दृश्यत इति व्याकुलत्वमित्यर्थः ।

एवं श्रद्धागमनं प्रतीक्ष्य व्यवस्थितायां देव्यामागता श्रद्धेत्याह— **श्रद्धा उपसृत्येत्यादिना** ।

---

१. 'वता भ' ख. घ. ङ. पाठः.

विष्णुभक्तिः— अथ तत्र किं वृत्तम् ।

श्रद्धा— यद्देव्याः प्रातिकूल्यमाचरतामुचितम् ।

विष्णुभक्तिः— तद्विस्तरेणावेदय ।

श्रद्धा— आकर्णयतु भगवती । देव्यामादिकेशवायतनादपक्रान्तायामेव किञ्चिदुत्सृष्टपाटलिम्नि भगवति भास्वति विजयघोषणाहूयमानानेकवरवीरबहुलसिंहनादबधिरितदिगन्ते प्रबलतरकर्णतालास्फालनोच्चलत्समदकरिकुम्भसिन्दूरसन्ध्यायमानदशदिशि प्रलयजलधरध्वानभीषणरवे तेषामस्माकं च संनद्धे सैन्यसागरे महाराजविवेकेन नैयायिकं दर्शनं दौत्ये प्रहितम् । गत्वा च तेनोक्तो महामोहः—

विष्णोरायतनान्यपास्य सरितां कूलान्यरण्यस्थलीः
पुण्याः पुण्यकृतां मनांसि च भवान् म्लेच्छान् व्रजेत् सानुगः ।

---

यत् [1]प्रातिपक्ष्यमाचरतामुचितं योग्यं तत् सम्पादितम् । अन्त्यदशामेव संप्राप्तो मोहः सपरिकर इत्यर्थः ।

उत्सृष्टपाटलिम्नि परित्यक्तनिजरागे सवितरि समाहृतप्रभासे । सन्ध्योपासनाद्यावश्यककर्मकरणानन्तरमित्यर्थः । उक्तविशेषणे सैन्यसागरे निशिततरप्रमाणतर्ककुलिशशरशतैरन्योन्यकलहकोलाहलं कर्तुमुद्युक्ते सति ईश्वरवादितया तर्कशूरतया च नैयायिकं दर्शनं तावत् प्रेषितमित्याह— नैयायिकं दर्शनमित्यादिना । तत्र नैयायिकदर्शनं नाम 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति सिद्धान्तरहस्यस्थितिः । एवमूरीकृतराद्धान्तोऽसावतिनिशिततर्कशतकचूर्णपूर्णमुखमुखरो नैयायिकः प्रेषितो विवेकेनेत्यर्थः ।

विष्णोरिति । यद्यपि व्यापनशीलस्य सर्वगतस्य विष्णोरायतन-

---

१. 'प्रतिपक्षमा' ख. घ. पाठः.

नो चेत् सन्तु कृपाणदारितभवत्प्रत्यङ्गधाराक्षर-
द्रक्तस्फीतविदीर्णवक्त्रविसरत्फेट्कारिणः फेरवाः ॥५॥

**विष्णुभक्तिः** — ततस्ततः ।

**श्रद्धा** — ततो देवि! विकटललाटतटताण्डवितभ्रुकुटिना क्रुद्धेन महामोहेन अनुभवत्वस्य दुर्नयपरिपाकस्य फलं विवेकहतक इत्यभिधाय स्वयं पाषण्डागमाः पाषण्डतर्कशास्त्रैः समं समराय प्रथमं समुद्योजिताः । अत्रान्तरे अस्माकमपि सैन्यशिरसि —

---

निर्देशोऽनुपपन्नः, तथापि प्रतिपत्तिसौकर्यार्थं सालग्रामसवितृमण्डलहृदयपुण्डरीकाविमुक्तक्षेत्रद्वारवतीपुरुषोत्तमायतनकाञ्चीपद्मनाभदेवदेवेशक्षेत्रादिस्थानान्याश्रितानि । तेन च नैयायिकेन यथादेशमादेशमादाय सत्वरं मोहमुपसृत्य अरे मोहहतक! यदि ते जिजीविषा, तद्यत्र न स्थातव्यम् । सद्भिर्यान्यायतनान्याश्रितानि तानि त्वया नाश्रयणीयानि । आश्रय शीघ्रं दुर्जनानेव । नो चेदस्मत्कृपाणधारैव ते शिरस्सारमवगच्छतीत्यतद्राज्ञो विवेकस्य वचनमित्युक्तो मोह इत्यर्थः । फेरवाः सृगालाः । फट्कारिणः फट् इत्यनुकरणशब्दः, तं कुर्वन्तीत्यर्थः ॥ ५ ॥

अनुभवत्वस्य दुर्नयपरिपाकस्य फलं विवेकहतक इति । अपौरुषेयतया निर्दिष्टाद्वैतागममहावाक्यश्रवणजनितं शमदमाद्यनेकसाधनैर्दुःखेनानीयमानत्वाद् दुर्नयं सम्यग् ज्ञानं तस्य परिपाकः निर्विचिकित्सतया साक्षात्करणं तस्य फलं सनिदानाविद्याद्यनर्थनिवृत्तिः तमनुभवत्विति । स्वयमप्यविद्यामूलो विलयं गच्छेद् इत्यर्थः । पाषण्डागमा नाम बौद्धाद्यागमाः । तत्र बौद्धागमस्तावत् 'चैत्यं वन्देत स्वर्गकाम' इत्यादिसंसारविषयफलमधिकृत्य प्रवृत्तः । मोक्षविषयस्तु — क्षणिकान्येव विज्ञानानि, प्रत्यभिज्ञा च भ्रान्तिः, सैवेयं ज्वालेतिवत् । स्थायित्वभ्रमेण रागद्वेषादिदोषैरुत्पाद्यमानैः प्रवृत्तिफलकैर्विषयाविभ्रमैश्च दूषितानि विज्ञानानि । तेषु च विभ्रमेषु क्षणिकविज्ञानदूषकेषु सर्वं क्षणिकं सर्वं स्वलक्षणं सर्वं दुःखं सर्वं

वेदोपवेदाङ्गपुराणधर्म-
शास्त्रेतिहासादिभिरुच्छ्रितश्रीः।
सरस्वती पद्मकरा शशाङ्क-
सङ्काशकान्तिः सहसाविरासीत् ॥ ६ ॥

शून्यमिति चतुर्विधकल्पपरिभावनया परिभ्रष्टेषु विशुद्धज्ञानचरमक्षणोदयो मोक्ष इति। आर्हतागमस्तु जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षाः सप्त पदार्था इत्येवमादिः। तत्र जीवो नाम भोक्ता। अजीवो भोज्यम्। आस्रवः इन्द्रियाणि। संवरः समाधिः। निर्जरस्तप्तशिलारोहणादिः। बन्धोऽष्टविधं कर्म। ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तरायिकमिति चत्वारि घातिकर्माणि। ज्ञानावरणीयं स्वशास्त्रप्रामाण्यप्रतिपत्तिः। दर्शनावरणीयं परदर्शनप्रतिपत्तिः। मोहनीयं भयप्रामाण्यम्। आन्तरायिकं स्वदर्शन-सविरोधभानमिति चत्वारि घातिकर्माणि। वेदनीयं नामिकं गोत्रिकमायुष्कमिति अघातिकर्माणीति बन्धव्यवस्था। मोक्षस्तु सततोर्ध्वगमनं लोकाकाशप्राप्तिरित्येवमार्हतसमयः। लोकायतिकतन्त्रस्तु पृथिव्यादीनि चत्वार्येव भूतानि तत्त्वम्। चैतन्यं तु तत्र संयोगविशेषान्मदशक्तिवदभिव्यज्यते। प्रत्यक्षमेव प्रमाणम्। नास्ति परलोकः। पञ्चत्वमेवापवर्गः इत्यादिपाषण्डागमाः प्रवृत्ता इत्यर्थः। पाषण्डानां तर्कोऽपि बौद्धस्य तावत्—यत् सत् तत् क्षणिकं सन्तश्चामी भावा यथा जलधर इत्यादि। आर्हतस्यापि—स्यादस्ति, स्यान्नास्ति, स्याद्वक्तव्यं, स्यादवक्तव्यं, स्यादस्ति वक्तव्यं च, स्यान्नास्त्यवक्तव्यं च, स्यादस्ति च नास्ति च वक्तव्यं चावक्तव्यं चेत्येवं न्यायोपबृंहितः सर्वमनेकान्तं वस्तुत्वाद्दरम्बनरसिंहवदित्यादिस्तर्कः। एवमाद्यागमतर्कशास्त्राद्युपकरणोपबृंहिता महामोहाज्ञया समराय सरभसं सन्नद्धाः सुगतादय इत्यर्थः। अत्रान्तरे अस्मत्सैन्यमध्ये।

वेदा ऋग्वेदादयः। उपवेदास्त्वायुर्वेदधनुर्वेदप्रभृतयः। अङ्गानि शिक्षा व्याकरणं कल्पो निरुक्तं छन्दो ज्योतिषमित्येवंरूपाणि। पुराणानि श्रीविष्णुपुराणप्रभृतीनि। धर्मशास्त्राणि याज्ञवल्क्यमानवप्रभृतीनि। इतिहासो

१. 'णि वे' क. पाठः. २. 'धविरोधभान', ३. 'स्र' ख. घ. पाठः. ४. 'स्मद्यक्ति' ङ. पाठः. ५. 'व्य' ख. घ. पाठः.

**विष्णुभक्तिः** — ततस्ततः ।

**श्रद्धा** — ततो देवि! वैष्णवशैवसौरादयो देव्याः सकाशमागताः ।

**विष्णुभक्तिः** — ततस्ततः ।

**श्रद्धा** — तदनन्तरं च —

साङ्ख्यन्यायकणादभाषितमहाभाष्यादिशास्त्रैर्वृता
स्फूर्जन्न्यायसहस्रबाहुनिवहैरुद्द्योतयन्ती दिशः ।
मीमांसा समरोत्सुकाविरभवद्धर्मेन्दुकान्तानना
वाग्देव्याः पुरतस्त्रयीत्रिणयना कात्यायनीवापरा ॥ ७ ॥

---

महाभारतादिः । आदिशब्देन काव्यनाटकादयो गृह्यन्ते एभिर्यथोक्तैरुच्छ्रितश्रीरुपचितप्रभासा सर्वतः प्रद्योतमानेत्यर्थः पद्मकरा पङ्केरुहोदरसरससुन्दरकरपल्लवेत्यर्थः । सहसा तत्क्षणादेव । आविरासीद् आविर्बभूवेत्यर्थः । एवं पाषण्डागमैरसत्तर्कसहितैर्वैदिकप्रमाणैश्च सह सत्तर्कैरन्योन्यवादकलहकोलाहल कर्तुमुद्यते सत्यप्रतिभादिपरिहारेणाभितः प्रमाणयुक्त्यादिकं स्फोरयन्ती समनुजिघृक्षया सरस्वती सम्बभूवेत्यर्थः । ननु सौगताद्यागमानामपि सरस्वतीरूपत्वात् कथमत्रैवाविर्भाव इति चेत्, सत्यं, किन्तु पुरुषार्थानुपयोगितयानर्थहेतुत्वाच्च पुलाकादिवदुपक्षणीयं स्यादिति न विरोधः ॥ ६ ॥

वैष्णवागमाः श्रीसात्त्वतपञ्चरात्रप्रभृतयः । शैवागमाः श्रीमायावैभवकालोत्तरप्रभृतयः । सौरागमाः सौरतत्त्वनिवेदकसौरसंहिताः । आदिशब्देन पञ्चप्रश्नरेवन्तकल्पप्रभृतयः । त एते सर्व एव उपादेयांशमादायागमाः समागता इत्यर्थः ।

**साङ्ख्यं** कापिलं दर्शनम् । न्यायमाक्षपादिकं दर्शनं, नैयायिकमित्यर्थः । कणादभाषितं वैशेषिकम् । महाभाष्यं व्याकरणशास्त्रम् । आदिशब्देन कौमारसारस्वतभोजव्याकरणादयो गृह्यन्ते । स्फूर्जन्न्यायेति । सहस्राधिकरणनिर्णीतभास्वरन्यायानां सहस्रा (१) एव बाहवो रश्मयः तेषां

---

१. 'रेत्यर्थः' ख. घ. पाठः.

**शान्तिः** — अये! कथं पुनः स्वभावप्रतिद्वन्द्विनामागमानां तर्काणां च समवायः सम्पन्नः।

**श्रद्धा** — पुत्रि!

समानान्वयजातानां परस्परविरोधिनाम्।
परैः प्रत्यभिभूतानां प्रसूते सङ्गतिः श्रियम्॥ ८॥

तेन वेदप्रसूतानां तेषामवान्तरविरोधेऽपि वेदसंरक्षणाय नास्तिकपक्षप्रतिक्षेपणाय च शास्त्राणां साहित्यमेव। आगमानां तु तत्त्वं विचारयतामविरोध एव। तथाहि—

---

निवहैः। दिश इत्युपलक्षणार्थम्। धर्मादितत्तत्पदार्थजातं तत्तदज्ञाननिरसनेन सर्वं प्रद्योतयन्तीत्यर्थः। मीमांसा महीकृतविचारणा। धर्मेन्दुकान्तानना धर्म एवेन्दुवत् कान्तमाननं यस्याः सा धर्मेन्दुकान्तानना। त्रयीत्रिणयना सर्वार्थावभासकवेदत्रयनेत्रेत्यर्थः। कात्यायनीव भुवनकण्टकभूतसुम्भाद्यसुरनिर्वापणाय प्रवृत्ता भक्तजनानुजिघृक्षया गृहीतविग्रहा भगवती दुर्गेव समरसम्भ्रमसमुत्सुका भारत्याः पुरतः प्रादृश्यतेत्यर्थः॥ ७॥

ननु निसर्गत एव परस्परविरुद्धानां वैशेषिकादितन्त्राणामेकार्थसमवायः कथमिति चोदयति— **अये कथं पुन**रित्यादिना।

"परस्परविरोधे हि वयं पञ्चैव ते शतम्।
परैः सह विरोधे तु वयं पञ्चोत्तरं शतम्॥"

इति न्यायात् प्रसिद्धा खलु लोके प्रबलविरोधे मिथो विरुद्धानामप्येककारिमित्रतेति न्यायावष्टम्भेन उत्तरमाह— **समानान्वये**त्यादिना। प्रसूते सङ्गतिः श्रियमिति। स्वान्वयविनाशप्राप्तावन्योन्यसमवायः कार्यसिद्धिं तनोतीत्यर्थः॥ ८॥

**तेन वेदप्रसूताना**मिति[1]। यद्यपि अवान्तरकलहाकुलता[2], तथाप्यागमिकत्वात् सर्वेषामागमार्थसंरक्षणस्यावश्यापेक्षणीयत्वात् नास्तिकपक्ष-

---

१. 'ति। यस्मादेवं तस्मात् य' क. ख. घ. पाठः. २. 'हलाहलता' ख. घ. पाठः.

ज्योतिः शान्तमनन्तमद्वयमजं तत्तद्गुणोन्मीलनाद्
ब्रह्मेत्यच्युत इत्युमापतिरिति प्रस्तूयते नैकधा ।

निरसनाय च साङ्गत्यं सञ्जाघटीतीत्यर्थः । नन्वागमार्थः सर्वैस्तमःप्रकाशवद्विरुद्धत्वेन स्वीकृतः । तथाहि — नैयायिकास्तावत् "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि षोडश पदार्था" इति प्रतिपन्नाः । तेषु च पदार्थेषु द्वादशपदार्थानां प्रमेयभूतानां प्राधान्येन पुरुषार्थविरोधित्वात् साधर्म्यवैधर्म्यपरिभावनया तत्त्वज्ञानाद् निःश्रेयसाधिगम इति च वर्णयाम्बभूवुः । तथा वैशेषिकैरपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः षडेव पदार्थाः । तेषां चेश्वरानुगृहीतेन साधर्म्यवैधर्म्यपरिभावनाजनितेन तत्त्वज्ञानेनापवर्ग इति निरणायि । साङ्ख्यास्तु — ज्ञानेन्द्रियकर्मेन्द्रियभूततन्मात्रमहाभूतमनोहङ्कारमहदव्यक्तपुरुषा इति पञ्चविंशतिः तत्त्वानि । प्रकृतिपुरुषविवेकविज्ञानेन[१] च मुक्तिरित्येवं व्यवस्थिताः । तथा भागवतैरपि वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धलक्षणव्यूहचतुष्टयं तत्त्वमिति परिकल्प्य वासुदेवः परा शक्तिः परमात्मनोऽपृथग्भूता तदात्मकं जगदित्येवमवर्णि[२] । तथा शैवाश्च कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः । आत्मा चैतन्यम् अज्ञानं बन्धः[३] । परमेश्वरस्तु सकलनियन्ता अन्य एव । तेन च भिन्नाभिन्नं जगत्[४] इत्येवं निश्चिताः । सौरा अप्यध्यात्माधिदैवतभावेन विभक्तसवितृजीवयोरभेदबोधकाजपाख्यमन्त्रमहावाक्यगम्यं सावित्रं तत्त्वमित्यभ्युपगताः । वैयाकरणानां स्फोटविवर्तं जगत्, परमार्थतस्तु स्फोट एव तत्त्वमिति मनीषा । प्राभाकराणां तु द्रव्यगुणकर्मसामान्यविशेषशक्तिपारतन्त्र्यनियोगा[५] इत्यष्टौ पदार्थाः परिकल्पिताः । द्रव्यगुणकर्मसामान्यात्मकं तत्त्वचतुष्टयमेवेति भाट्टमतम् । इत्येवं विरोधात् कथं साङ्गत्यं घटत इति चेत्, तत्राह — आगमानां तु तत्त्वमित्यादिना ।

अविरोधमेव दर्शयति — **तथाहि ज्योतिरित्यादिना** । ज्योतिश्चिद्घनम् । शान्तं सर्वोपद्रवरहितम् । अनन्तं दिग्देशकालवस्तुपरिच्छेदशून्यम् । अद्वयमिति । सजातीयविजातीयस्वगतभेदरहितं जीवेश्वरादिभेदं

१. 'न मु' क. ग. ङ. पाठः. २. 'तं' ख. पाठः. ३. 'धः पर' क. पाठः. ४. 'न्धः स्वात्मैव सर्वभूतानामेक एव परमेश्वरः' ख. घ. ङ. पाठः. ५. 'णसा' ६. 'गसमवाया' ङ. पाठः.

तैस्तैरेव सदागमैः श्रुतिसखैर्नानापथप्रस्थितै-
र्गम्योऽसौ जगदीश्वरो जलनिधिर्वारां प्रवाहैरिव ॥ ९ ॥

विष्णुभक्तिः—ततस्ततः ।

श्रद्धा — ततो देवि! परस्परं करितुरगरथपादातानां निरन्तरशरनिकरधारासम्पातोपदर्शितदुर्दिनानां तेषामस्माकं च योधानां तुमुलः सम्प्रहारः प्रावर्तत । तथाहि —

बहलरुधिरतोयास्तत्र तत्र स्रवन्त्यो
निबिडपिशितपङ्काः कङ्करङ्कावकीर्णाः ।

---

व्यावर्तयति । अजं जन्मादिषड्भावविक्रियारहितम् । ननु कथं तर्हि ब्रह्मादिभेदप्रतिभानमिति चेत्, तत्राह — तत्तद्गुणोन्मीलनादिति । एकस्यैव परमेश्वरस्य सत्त्वादेस्तस्य तस्य गुणस्योन्मीलनात् प्रविजृम्भणाद् बहुधा भानमित्यर्थः। उक्तं च —

"यः पृथिव्यामितीशोऽसावन्तर्यामी जगद्गुरुः ।
हरिर्ब्रह्मा पिनाकीति बहुधैकोऽभिधीयते ॥"

इति । तत्त्वव्यवस्था तावदेवं भवतु । एतावता कथं सर्वागमानां सम्भूय तत्रैव तात्पर्यमिति, तत्राह — तैस्तैरित्यादिना । यस्मादेवमेकं तत्त्वं (तेन ?) तस्मात् तैस्तैः वेदार्थवादिभिरागमैरज्ञाननिमित्तमिथ्याभिनिवेशपरिहारेण प्रयोजनमात्रशरणतया वस्तुतत्त्वनिरूपकाणामेतेषाम्

"त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥"

इति न्यायात् सर्वागमानामखण्डानन्दैकरसब्रह्मण्येव समन्वयः सेत्स्यतीत्यभिप्रायः ॥ ९ ॥

स्रवन्त्यः सरितः । निबिडं निश्छिद्रं पिशितं मांसमेव पङ्को यासु वास्तथोक्ताः । कङ्का गृध्राः रङ्का बलाः तैर्व्याप्ताः । शरैर्दलिताश्च ते

---

१. 'रङ्कावदातैर्व्या' क. पाठः. २. 'तैरवकीर्णा व्या' ख. पाठः.

शरदलितविशीर्णोत्तुङ्गमातङ्गशैल-
स्खलितरयविशीर्णच्छत्रहंसावतंसाः ॥ १० ॥

एवमतिमहति दारुणे सङ्ग्रामे परपक्षविरोधितया पाषण्डागमैरग्रेसरीकृतं लोकायतं तन्त्रमन्योन्यसैन्यविमर्दैर्विनष्टम् । अनन्तरं पाषण्डागमा निर्मूलतया सदागमार्णवप्रवाहेण पर्यस्ताः । सौगतास्तावत् सिन्धुगान्धारपारसीकमगधाङ्गवङ्गकलिङ्गादीन् म्लेच्छप्रायान् प्रदेशान् प्रविष्टाः । पाषण्डादिगम्बरकापालिकादयस्तु पामरबहुलेषु पाञ्चालमालवाभीरानर्तसागरानूपेषु निगूढं सञ्चरन्ति । न्यायानुगतया च मीमांसया प्रगाढप्रहारजर्जरीकृता नास्तिकतर्कास्तेषामेवागमानामनुपथं प्रयाताः ।

---

विशीर्णाश्च ते उत्तुङ्गाश्च मातङ्गाश्च हस्तिनः त एव शैलाः तेभ्यः शैलेभ्यः स्खलितरयेभ्यो विगतवेगेभ्यो विशीर्णानि पतितानि छत्राण्येव हंसवत् सितत्वाद्धंसाः त एवावतंसः शेखरभूषणं यासां स्रवन्तीनां तास्तथोक्ताः ॥ १० ॥

अन्योन्यसैन्यविमर्दैर्विनष्टमिति । अयमर्थः — देह एवात्मेति पक्षस्तावदागमिकैः कुत्सित एव नश्वरत्वात्, पाषण्डैरागमैरपि निन्दितः । एवं सर्वैर्निरस्तत्वादशरणः स्वयमेव विनष्ट इति । निर्मूलतयेति । मूलभूतप्रमाणाभावात् सरित्परिसरतरव इव अपौरुषेयतया निर्दिष्टसदागमसमुद्रसन्दोहैः पर्यस्ता विनष्टा इत्यर्थः । कापालिकादय इति । आदिशब्देन तल्लिङ्गग्रहणमन्तरेण तद्धर्मानुष्ठायिनो गृह्यन्ते । पामरा असंस्कृतप्राणिनः । ननु पाषण्डानां यद्यप्यागमदौर्बल्यं, तथापि तर्कशूरत्वात् तन्निराकरणं कथमिति चेत् तत्राह— न्यायानुगतयेत्यादिना । अयमर्थः — प्रमाणानुग्राहकः खलु तर्कः । स चानुग्राह्यं प्रमाणं विना स्वयमेव कञ्चिदर्थं साधयितुं दूषयितुं वा न समर्थः । अनुग्राह्यं प्रमाणं च पाषण्डतर्काणां

---

१. 'म्लेरपि', २. 'रारव इव' ग. पाठः. ३. 'पमयुक्तामे' क. ख. ङ पाठः.

**विष्णुभक्तिः**— ततस्ततः ।

**श्रद्धा**— ततो वस्तुविचारेण कामो हतः । क्षमया क्रोधपारुष्यहिंसादयो निपातिताः । सन्तोषेण लोभतृष्णादैन्यानृतपैशुन्यवाक्स्तेयासत्प्रतिग्रहादयो निगृहीताः । अनसूयया मात्सर्यं जितम् । परोत्कर्षभावनया मदो निषूदितः ।

**विष्णुभक्तिः**— (सहर्षम्) साधु साधु सम्पन्नम् । अथ महामोहस्य को वृत्तान्तः ।

**श्रद्धा**—देवि ! महामोहोऽपि योगोपसर्गैः सह न ज्ञायते क्व निलीनस्तिष्ठतीति ।

**विष्णुभक्तिः**—अस्ति तर्हि महाननर्थशेषः । परिहरणीयश्चासौ । यतः—

---

नास्ति । ततः प्रशिथिलमूलास्तर्काभासाः प्रबलन्यायानुगृहीतवैदिकप्रमाणविरोधे तदागमपृष्ठमेव प्रतिपद्यन्त इत्यर्थः ।

अथ द्वन्द्वयुद्धप्रकारः प्रदर्श्यते—ततो वस्तुविचारेणेत्यादिना ।

"मारितोत्तानमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥"

इत्येवमादिप्रकारेण वस्तुतत्त्वविचारेण कामो हतः । निर्मूलित इत्यर्थः । परस्योत्कर्षः परोत्कर्षः, तस्य भावना प्रतिपत्तिः, तया विद्यादिनिमित्तमदो निवर्तित ।

"उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ।"

इति न्यायादित्यर्थः ।

योगश्चित्तसमाधानम् । योगस्योपसर्गाः परिपन्थिनः कामक्रोधलोभमोहमदमात्सर्यादयः । निलीनः तिरोहितः ।

ननु मोहस्तिरोहितश्चेत्तथा तिष्ठतु, को विरोध इति तत्राह—**परिहरणीयश्चेति** । यथा खलु अदृश्यमानोऽपि ब्रह्मराक्षसः करोत्येवानर्थम्, एवमयमपि मोहोऽतः समूलंकुलमुच्छेद्य एवेत्यर्थः ।

---

१. 'हताः । ह' ग. पाठः. २. 'लघु' ख. पाठः.

अनादरपरो विद्वानीहमानः स्थिरां श्रियम् ।
अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत् ॥ ११ ॥

अथ मनसः को वृत्तान्तः ।

श्रद्धा — देवि ! तेनापि पुत्रपौत्रादिव्यसनजनितशोकावेगेन जीवोत्सर्गायाध्यवसितम् ।

विष्णुभक्तिः —(स्मितं कृत्वा) यद्येवं स्यात्, सर्व एव वयं कृतकृत्या भवामः । पुरुषश्च परां निर्वृतिमापद्येत । किन्तु कुतस्तस्य दुरात्मनो जीवत्यागः ।

श्रद्धा—एवं देव्यां प्रबोधोदयाय गृहीतसङ्कल्पायामचिरादेव शरीरेणैव न भविष्यति ।

विष्णुभक्तिः — तद् भवतु । अस्य वैराग्योत्पत्तये वैयासिकीं सरस्वतीं प्रेषयामः ।

(इति निष्क्रान्ते ।)

प्रवेशकः ।

---

अत्रैव नीतिशास्त्रं प्रमाणयति— अनादरपर इति । क्षुद्रोऽयं वराकः किं करिष्यतीत्येवमवधीरितोऽग्न्यादिरपि । स्थिरां चिरकालस्थायिनीं श्रियमन्विच्छन् नाल्पानप्यग्न्यादीन् परिशेषयेदित्यर्थः ॥ ११ ॥

स्वकृतव्यसनफलं स्वेनैव भुज्यते, समीचीनं जातमित्यभिप्रायेण स्मितं कृत्वेत्युक्तम् । यद्येवमित्युरुयत्नसाध्यतां दर्शयति । कृतकृत्या भवाम इति । शान्त्यादयश्चरितार्था इत्यर्थः । पुरुषः क्षेत्रज्ञः । परेण परमानन्दस्वरूपेण परमात्मनैकत्वं प्राप्नोतीत्यर्थः । किंत्विति । प्रायेण पापिष्ठाः पुरुषार्थविरोधिनो न नश्यन्तीत्यर्थः । अथवा केनोपायेन साध्योऽयमर्थ इत्येवं निरूपयति — किन्त्वित्यादिना ।

एवं देव्यामिति । देव्याः प्रसादादसाध्यं नास्त्येवेत्यर्थः ।

विचिन्त्य वैराग्यमेव साधनमिति निश्चित्याह — तद् भवत्वित्यादिना । व्यासेनोक्ता वाणी वैयासिकी ।

(ततः प्रविशति मनः सङ्कल्पश्च ।)

**मनः** — (सास्रम्) हा पुत्रकाः! क्व गताः स्थ । दत्त मे प्रतिवचनम् । भोः कुमारकाः! रागद्वेषमदमात्सर्यादयः! परिष्वजध्वं माम् । सीदन्ति ममाङ्गानि । हा न कश्चिद् वृद्धं मामनाथं सम्भावयति । क्व गता असूयादयः कन्यकाः । आशातृष्णाहिंसादयो वा स्नुषाः । अथ ता अपि मन्दभाग्यस्य मे समकालमेव दैवहतकेनापहृताः । (सवैक्लव्यम्)

"मांसखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
यदि नाच्छाद्यते वस्त्रैर्मक्षिकाणां महोत्सवः ॥

तमःश्वभ्रनिभं दृष्ट्[1] वर्षबुद्बुदसन्निभम् ।
नाशप्रायं सुखाद्धीनं नाशोत्तरम[3]भावगम् ॥

ब्राह्मणस्य च देहोऽयं नोपभोगाय कल्पते ।
इह क्लेशाय महते प्रेत्यानन्त्यसुखाय च ॥"

इत्येवमादिकां संसारासारावभासिकां सरस्वतीं प्रेषयामः नियोजयाम इत्यर्थः ।

**प्रवेशक** इति । अङ्कद्वयस्यान्ते शेषार्थस्योपसूचनादनुदात्तोक्त्या नीचपात्रप्रयोजितः प्रवेशक इति नाट्यविदः ।

एवं तावदात्मसन्तानविनाशसान्द्रव्यसनसन्दोहसागरसम्पातसमुद्विग्नम् अप्राप्तशरणम् अन्त्यावस्थां गन्तुं कृतव्यवसायं तावन्मन इत्युक्तम् । इदानीं तस्य वैराग्योत्पत्तिप्रकारं कथयितुं मनसश्चापल्यं दर्शयति — **ततः प्रविशति मन** इत्यादिना ।

**वृद्धं मामिति** । अनादेः संसारस्य साधकं हि मनः । तेनाविद्यया-नादिसिद्धनिजरूपत्वाद् वृद्धमित्यर्थः । स्नुषा पुत्रभार्या ।

१. 'भ्रमतं दृष्ट्वा व' ख. पाठः. २. 'धी' ख. ग. पाठः. ३. 'महापगम्' ग. पाठः. ४. 'का संसारप्रागराभासिका' क. पाठः.

विसर्पति विषाग्निवद् दहति सर्वमर्माविध-
स्तनोति भृशवेदनाः कषति सर्वकाषं वपुः।
विलुम्पति विवेकितां हृदि च मोहमुन्मीलय-
त्यहो ग्रसति जीवितं प्रसभमेष शोकज्वरः॥ १२॥

(इति मूर्च्छितः पतति ।)

**सङ्कल्पः**— राजन्! समाश्वासिहि समाश्वासिहि ।

**मनः**— (समाश्वस्य) कथं देवीप्रवृत्तिरपि न मामेवमवस्थं समाश्वासयति ।

**सङ्कल्पः**—(सास्रम्) देव! कुतोऽद्यापि देवीप्रवृत्तिः। यतः श्रुतकुटुम्बव्यसनसञ्जातशोकानलदग्धहृदया हृदयास्फोटं विनष्टा ।

**मनः**—हा प्रिये! क्वासि । देहि मे प्रतिवचनम् । ननु देवि!

स्वप्नेऽपि देवि! रमसे न विना मया त्वं
स्वापे त्वया विरहितो मृतवद् भवामि ।
दूरीकृतासि विधिदुर्ललितैस्तथापि
जीवत्यहो तु मन इत्यसवो दुरन्ताः॥ १३॥

(पुनर्मूर्च्छति ।)

---

मर्माविधः मर्मभेदकः । कषति पेषयति । विलुम्पति विवेकिताम् अपमार्ष्टि बुद्धिमत्ताम् ॥ १२ ॥

विधिदुर्ललितैः विधिविलसितैः । असवः प्राणाः । दुरन्ता दुर्विनाशाः ।

"नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।"

इति न्यायात् प्रवृत्त्या विना नास्त्येव मन इत्यर्थः ॥ १३ ॥

**सङ्कल्पः**— राजन्! समाश्वासिहि समाश्वासिहि।

**मनः**— (समाश्वस्य) अलमस्माकमतः परं जीवितेन! सङ्कल्प! चितामारचय। यावदनलप्रवेशेन शोकानलं निर्वापयामि।

(ततः प्रविशति सरस्वती।)

**सरस्वती**—प्रेषितास्मि भगवत्या विष्णुभक्त्या, यथा सखि! सरस्वति! गच्छापत्यव्यसनखिन्नस्य मनसः प्रबोधनाय। यथा च तस्य वैराग्योत्पत्तिर्भवति, तथा यतस्वेति। तद् भवतु तत्सन्निधिमेवोपसर्पामि। (उपसृत्य) वत्स! किमेवं विक्लबोऽसि। ननु विदितपूर्वैव भवता भावानामनित्यता। अधीतानि च त्वयैतिहासिकान्युपाख्यानानि। तथाहि—

---

**निर्वापयामि** विनाशयामि। आत्मात्मीयत्वेनाध्यस्तपुत्रकलत्रादि[1]वियोगजन्मा शोकदहन आत्महत्यामपि व्यवसाययतीत्यर्थः। उक्तं च—

"उपलब्धेरनिष्टस्य चित्तं यदभिहन्यते।
दुःखात्मा सम्मतः शोको मोहरोदनभावकः॥"

इति।

विष्णुभक्तिनियोगान्मनोवैमल्यसम्पादनाय पूर्वमेव समागम्यावसरं प्रतीक्ष्यावस्थिता सरस्वती देवीनियोगमनुस्मरन्ती मनोऽध्यवसितं विज्ञायायमवसर इति प्रवर्तत इत्याह—**ततः प्रविशति सरस्वतीत्यादिना**।

**किमेवं विक्लबोऽसीति**। "जातस्य हि ध्रुवो मृत्युरि"ति शास्त्रात् निश्चिता खल्वन्त्यदशा जनिमतः। किञ्च शोकसहस्रैरपि कालगृहीतानां न प्रत्यावृत्तिः। अतः फलशून्यं वैक्लव्यमिति भावः। इतिहाससम्बन्धीन्युपाख्यानानि ऐतिहासिकानि—

"चञ्चलं धनमपायि शरीरं यौवनं त्रिचतुराणि दिनानि।
श्रेयसे च यशसे च यतध्वं मृत्युरापतति गच्छति कालः॥"

---

१. 'दिजनावियोगाच्छोक' ब. पाठः.

भूत्वा कल्पशतायुषोऽम्बुजभुवः सेन्द्राश्च देवासुरा
मन्वाद्या मुनयो मही जलधयो नष्टाः परं कोटयः।
मोहः कोऽयमहो महानुदयते लोकस्य शोकावहः
सिन्धोः फेनसमे गते वपुषि यत् पञ्चात्मके पञ्चताम् ॥१४॥

तद् भावय भावानामनित्यताम्। नित्यानित्यवस्तुदर्शिनं न स्पृशति शोकावेगः। यतः—

एकमेव सदा ब्रह्म सत्यमन्यद् विकल्पितम्।
को मोहः कस्तदा शोक ऐकात्म्यमनुपश्यतः॥ १५॥

**मनः**—भगवति! शोकावेगदूषिते मनसि विवेक एव मे नावकाशं लभते।

---

"यावत् स्वस्थमिदं शरीरमरुजं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः॥"

इत्येवमादीनि संसारासारताप्रतिपादकानीत्यर्थः।

"ब्रह्मादीनां शरीराणि श्वसूकरशरीरवत्।
यतो जिहासितान्येव"

इति न्यायाच्चिरकालावस्थायित्वेन सम्प्रतिपन्नानामपि चतुर्मुखादीनां विद्यते क्षयः, अन्यत्र का कथेति कथयितुं तेषां नाशं दर्शयति—**तथाहि** भूत्वेत्यादिना। अम्बुजभुवो ब्रह्माणः। असुरा विरोचनप्रभृतयः। पञ्चात्मके पञ्चभूतारब्धे। वपुषि शरीरे। पञ्चतामन्त्यावस्थाम् ॥ १४ ॥

तत् तस्माद्। भावय चिन्तय। भावानां पदार्थानाम्।

सच्चिदानन्दाद्वयप्रत्यग्रूपपरिपूर्णब्रह्मवस्त्वेव सत्यम् अबाध्यम्। इतरत् सर्वं स्वप्नप्रपञ्चरज्जुसर्पमृगतृष्णिकादिवत् कल्पितं बाध्यमसारमित्यवगच्छतः शोकादीनां न क्वाप्यवकाश इत्यर्थः॥ १५॥

---

१. 'रानित्यता' क. पाठः. २. 'लस्था' क. ग. पाठः. ३. 'यपरि' क. पाठः.

सरस्वती — वत्स ! स्नेहदोष एषः । प्रसिद्ध एवायमर्थः स्नेहः सर्वानर्थप्रभव इति । तथाहि —

उप्यन्ते विषवल्लिबीजविषमाः क्लेशाः प्रियाख्या नरै-
स्तेभ्यः स्नेहमया भवन्ति नचिराद्वज्राग्निगर्भाङ्कुराः ।
येभ्योऽमी शतशः कुकूलहुतभुग्दाहं दहन्तः शनै-
र्देहं दीप्रशिखासहस्रशिखरा रोहन्ति शोकद्रुमाः ॥ १६ ॥

उप्यन्ते निर्वाप्यन्ते । सुतादिविषयस्नेहनिमित्ता प्रीतिरित्याख्या येषां बीजानां ते क्लेशकरत्वात् क्लेशाः बुद्धिगुहाक्षेत्रे संरोप्यन्त इत्यर्थः । विषवल्ल्यः शृङ्ग्यादिविषलतिकास्तासां बीजानीव दुःसहाः । (तेभ्यः)

"पुंसः पूर्वापरीभूता सुखित्वेन व्यवस्थितिः ।
बुद्धेरुन्मीलनी गाढं प्रीतित्वेन निगद्यते ॥"

इत्येवंविधप्रीतिलक्षणक्लेशेभ्यः । स्नेहो हार्दम् । उक्तं च —

"वस्तुसिद्धं[2] प्रति[3] प्राहुरुद्भूतां कारणैः स्वकैः ।
सुखावहां च तत्सिद्धौ स्नेहाख्यामात्मविक्रियाम् ॥"

इति । तन्मयाः तत्स्वरूपाः । वज्राग्निरशनिदहनः । वज्राग्निगर्भा अङ्कुरा येषां ते तथोक्ताः । स्पृष्टिमात्रेण नाशका इत्यर्थः । कुकूलहुतभुग्दाहं कुकूलहुतभुक् तुषाग्निः । तद्वदान्तरमेव कुटुम्बपोषणसामग्रीसम्पादनचिन्ताव्यसनरूपैःशोकदहनस्तुषपावकवद्देहेन्द्रियसङ्घातं दहन् रोहतीत्यर्थः । उक्तं च —

"यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥"

इति । अनवसानशोककान्तारं प्रविष्टोऽशरणं स्वात्मानं भूरि शोचयतीत्यर्थः ॥ १६ ॥

१. 'का किम्पाकफलवत् दुःसहा', २. 'द्धिं' ग पाठः. ३. 'प्रीतिमाहु' क. पाठः. ४. 'द' ख. पाठः. ५. 'पोऽग्निः पुटपाक' घ. पाठः. ६. 'ति न्यायात् अ' ख. पाठः. ७. 'रः प्रतायत इत्यर्थः' क. पाठः.

मनः — देवि! यद्यप्येवं, तथापि न शक्नोमि शोकानलदग्धः प्राणान् धारयितुम् । साधु सम्पन्नं, यदन्तकाले त्वं तावद् दृष्टासि।

सरस्वती — इदं चापरमकृत्यं यदात्महत्याध्यवसाय इति । अपिच, अमीषामपकारिणामर्थे कोऽयमत्यावेशो भवतः । पश्य तावत् —

क्वचिदुपकृतिः *कर्तामीभिः कृता क्रियतेऽथवा
तव न च भवन्त्येते पुंसां सुखाय परिग्रहाः ।
दधति विरहे मर्मच्छेदं तदर्थमपार्थकं
तदपि विपुलायासैः सीदन्त्यहो बत जन्तवः ॥ १७॥

---

साधु सम्पन्नमिति । त्वत्सं[2]प्रयोगान्मम महान् प्रसादः सञ्जात इत्यर्थः

[3]वं तावद् भिक्षुकपादप्रसारणन्यायेनाभिमुख्यमापाद्येदानीं फलाभावादनुपकारित्वाच्चैतेषामर्थे नाभिनिवेष्टव्यम् इति बोधयितुमाह — अपि चेत्यादिना ।

उपकाराभावमेव दर्शयति — पश्य तावदित्यादिना । अमीभिः कलत्रादिपरिग्रहैः । उपकृतिः उपकारः । *कर्ता न चेत्यन्वयः । भविष्यत्काले तावत्परिग्रहैः उपकारो न भविष्यतीत्यर्थः । भूतकालेऽपि निरूप्यमाणे क्लेश एव परं नोपकृतिरित्याह — कृता न चेति । इदानीमुपकाराभावः स्पष्ट एवेत्याह — क्रियत इति । एवं कालत्रयेऽपि सुखाय न भवन्तीत्येतावदेव न, दुःखहेतुत्वं च दृश्यत इत्याह — दधति विरह इत्यादिना । एवमनर्थहेतुत्वं स्पष्टम् । तथापि तदर्थं परिग्रहपोषणाय प्रवृत्तिवाणिज्यादिविपुलायासैः सीदन्ति जनाः । अहो कष्टं वर्तत इत्यर्थः ॥ १७ ॥

---

१. 'स्वत्प्रसादान्म' क. पाठः. २. 'त्संबन्धप्रयो' ग. घ. पाठः. ३. 'त्तिनीचसेवनवा' क. पाठः.

---

* कर्ता कर्मणि लुट् ।

**अपिच,**

तीर्णाः पूर्णाः कति न सरितो लङ्घिताः के न शैला
नाक्रान्ता वा कति वनभुवः क्रूरसञ्चारघोराः ।
पापैरेतैः किमिव दुरितं कारितो नासि कष्टं
यद् दृष्टास्ते धनमदमषीम्लानवक्त्रा दुरीशाः ॥ १८ ॥

**मनः**— देवि ! एवमेतत् । तथापि—

लालितानां स्वजातानां हृदि सञ्चरतां चिरम् ।
प्राणानामिव विच्छेदो मर्मच्छेदादरुन्तुदः ॥ १९ ॥

**सरस्वती**—वत्स! ममतावासनानिबन्धनोऽयं व्यामोहः । **उक्तं च**—

मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे ।
न तादृङ् ममताशून्ये कलविङ्केऽथ मूषके ॥ २० ॥

तत् सर्वथा सर्वानर्थबीजस्य ममत्वस्योच्छेदे यत्नः कर्तव्यः । पश्य,

प्रादुर्भवन्ति वपुषः कति वा न कीटा
यान् यत्नतः खलु तनोरपसारयन्ति ।

---

**पापैरेतैरिति** । कलत्रादिपरिग्रहैरेतैरात्मपोषणार्थं गच्छेति प्रहितः परेषामात्मनि धनित्वसम्भावनासमुपजनितदुर्मदमषीकलुषितकटाक्षाणां दुष्प्रौढानामग्रे निर्लज्जं निजगुणनिवहं निवेद्यातिगर्वोच्छूनं तन्मुखबिम्बमेवानिमेषनिरीक्षणेन निविष्ट इति यत्, तस्मादेतैरकारितं नास्तीत्यर्थः ॥ १८ ॥

**ममतावासनेति** । सम्बन्धाध्याससंस्काराधीन इत्यर्थः ॥

**कलविङ्कः** चटकः ॥ २० ॥

---

१. 'षां भ' क, ग. पाठः.

मोहः क एष जगतो यदपत्यसंज्ञां
तेषां विधाय परितोषयति स्वदेहम् ॥ २१ ॥

**मनः**— भगवति! एवम्। तथापि दुरुच्छेद्यस्तु ममत्वग्रन्थिः। तथाहि—

निरन्तराभ्यासदृढीकृतस्य
न स्नेहसूत्रग्रथितस्य जन्तोः।
जानामि किञ्चिद् भगवत्युपायं
ममत्वपाशस्य यतो विमोक्षः ॥ २२ ॥

**सरस्वती**— वत्स! भावानामनित्यताभावनमेव तावन्ममत्वोच्छेदस्य प्रथमोपायः। तथापि,

कति न पितरो दाराः पुत्राः पितृव्यपितामहा
महति वितते संसारेऽस्मिन् गतास्तव कोटयः।
तदिह सुहृदां विद्युत्पातोज्ज्वलान् क्षणसङ्गमान्
सपदि हृदये भूयो भूयो निवेश्य सुखी भव ॥ २३ ॥

---

ममत्वोच्छेदोपायं दर्शयति— **पश्य प्रादुर्भवन्तीत्यादिना**। कृमिसुतयोः स्वकीयमलजन्यत्वाविशेषादन्यतरात्मीयाभिमाने किमपि कारणं नास्तीत्यर्थः। उक्तं च—

"स्वदेहजानस्वसंज्ञान् यद्वद् दुःखान् क्रिमींस्त्यजेत्।
स्वसंज्ञानस्वजांस्तद्वत् सुतसंज्ञान् क्रिमींस्त्यजेत् ॥"

इति ॥ २१ ॥

**ग्रन्थिः** बन्धः। अनादिसंसारदृढीकृतत्वात्।

उपायान्तरमाह— **भावानामनित्यतेत्यादिना**। **प्रथमोपायः** प्रधानं साधनम्।

**कति न पितर इति**। विस्तृतेऽस्मिन् संसारे

**मनः**—भगवति! तव प्रसादादपास्त एव व्यामोहः । किन्तु,

तव मुखशशधरदीधिति-
गलितैर्विमलोपदेशपीयूषैः ।
क्षालितमपि मे हृदयं
मलिनं शोकोर्मिभिः क्रियते ॥ २४ ॥

तदार्द्रस्य शोकप्रहारस्य भेषजं प्रज्ञापयतु भगवती ।

**सरस्वती**—वत्स! ननूपदिष्टमेव मुनिभिः ।

अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ २५ ॥

इति ।

---

"मातापितृसहस्राणि पुत्रदारशतानि च ।"

इत्यादिशास्त्रेण,

("जायमानो हरेद् भार्यां वर्धमानो हरेद् धनम् ।
म्रियमाणो हरेत् प्राणान् नास्ति पुत्रसमो रिपुः ॥"

इत्यादिवचनात् ।?) गतागतं कुर्वतां मात्रादीनां यस्मादियत्ता नास्ति, तत् तस्मादिह विद्युत्पातोज्ज्वलान् चञ्चलसौदामनीद्युतिवद् दृष्टनष्टस्वरूपान् सुहृत्सम्बन्धान् हृदि निवेश्य भूयो भूयो भावयित्वा सुखी भवेत्यर्थः ॥ २३ ॥

**तव** प्रसादसलिलसन्दोहैः प्रक्षालितमप्यन्तःकरणमात्मापराधात् कलुषितमिव भातीत्यर्थः ॥ २४ ॥

**आर्द्रस्य** अभिनवस्य । निरर्गलं प्रवर्तमानस्य परवशदुःखव्रातस्येत्यर्थः ॥

**अकाण्डेति** । अचिन्तितोपस्थितानाम् । आर्द्राणां बहलानाम् । मर्मभेदिनां मर्मच्छिदाम् । गाढशोकप्रहाराणां गाढं दृढं शोकलक्षणप्रहाराणाम् । अचिन्ता अननुस्मरणमेव । भैषज्यमित्यर्थः ॥ २५ ॥

---

१. 'वा' क. पाठः. २. 'स्वा निर्वृतो भ', ३. 'भेषजमि' क. ङ. पाठः.

**मनः**—भगवति! एवमेतत्। दुर्वारं तु चेतः। यतः—

अप्येतद् वारितं चिन्तासन्तानैरभिभूयते।
मुहुर्वाताहतैर्बिम्बमभ्रच्छेदैरिवैन्दवम् ॥ २६ ॥

**सरस्वती**—वत्स! श्रूयतां चेतसोऽयं विकारः। ततः क्वचिच्छान्ते विषये चेतो निवेश्यताम्।

**मनः**—तत् प्रसीदतु भगवती। कोऽसौ शान्तो विषयः।

**सरस्वती**—वत्स! गुह्यमेतत्। तथाप्यार्तानामुपदेशे न दोषः।

नित्यं स्मरन् जलदनीलमुदारहार-
केयूरकुण्डलकिरीटधरं हरिं वा।
ग्रीष्मे सुशीतमिव वारि निरस्तशोकं
ब्रह्म प्रपद्य भज निर्वृतिमात्मनीनाम् ॥ २७ ॥

---

**एवमेतदिति**।

बाह्यपरिग्रहनिमित्तदुःखस्य एवं साध्यत्वं भवतु। किन्तु चित्तस्य नियमनं न शक्यत इत्याह—**अप्येतद्वारितमित्यादिना**। वस्तुतत्त्वविचारादिना वारितं निरुद्धमपि कुटुम्बचिन्तादिरेव प्रगल्भत इत्यर्थः ॥२६॥

**क्वचिच्छान्ते विषय इति**। सर्वसंसारधर्मविनिर्मुक्ते शान्ते वस्तुन्येकाग्रतासम्पादनमन्तःकरणविक्षेपं निरुणद्धीत्यर्थः॥

एवं प्रत्यक्प्रावण्यलक्षणाधिकारमापाद्योपदेष्टुमुपक्रमते—**तथाप्यार्तानामित्यादिना**। धनिनां बुद्धिमतां गुरुशुश्रूषणपराणामार्तानां चार्थित्वसामर्थ्यविद्वत्ताशालिनामत्राधिकारादुपदेशो युज्यत इत्यर्थः।

तत्र प्रथमं तावदधिकारितारतम्यापेक्षया सगुणं वस्तूपास्यत्वेन दर्शयती—**नित्यमिति**। नित्यं निरन्तरम्। **स्मरन्** चिन्तयन्। **उत्कृष्टहाराद्याभरणालङ्कृतं हरिम्**। वाशब्दात् सर्वाभरणसुन्दरमद्रिजापतिं वेत्यर्थः। एवं सगुणब्रह्मोपासनापरिपक्वकषायस्य क्रमप्राप्तं निर्गुणब्रह्मोपासनं

---

१. 'मगजा' घ. पाठः।

**मनः**—(विचिन्त्य सोच्छ्वासम्) सर्वथा त्रातोऽस्मि भगवत्या । (इति पादयोः पतति ।)

**सरस्वती**—वत्स! सम्प्रति उपदेशसहिष्णु ते हृदयं जातम् । अत एतदपरमप्युच्यते—

वशं प्राप्ते मृत्योः पितरि तनये वा सुहृदि वा
शुचा सन्तप्यन्ते भृशमुदरताडं जडधियः ।

---

दर्शयति—ग्रीष्म इत्यादिना । ग्रीष्मे घर्मकाले । खरतरमिहिरकिरणनिकुरुम्बनिपातनिर्दग्धनिजदेहस्य यथा जाह्नवीशिशिरतरसलिलावगाहनेन निर्वृतिः, एवं निरस्तनिखिलदुःखं निरतिशयानन्दरूपं च ब्रह्मस्वरूपं प्रतिपद्यावगम्यात्मनीनाम् आत्महितां प्रत्यगात्मस्वरूपेण वर्तमानां निर्वृतिं भज सेवस्वेत्यर्थः ॥ २७ ॥

सोच्छ्वासमिति । अशेषसंसारानर्थव्रातं प्रोत्सारयन्तीं वाणीमेतावन्तं कालं किमिति नाश्रौषं, येनानर्थव्रातः समनुभूत इत्यनुतापं दर्शयतीत्यर्थः । उक्तं च—

''यत्र त्वस्येति साटोपां कृत्स्नद्वैतनिषेधिनीम् ।
प्रोत्सारयन्तीं संसारं मय्यश्रौषं न किं श्रुतम् (?) ॥''

इति ॥

यद्यपि पूर्वमुपदिष्टमेव सगुणनिर्गुणरूपेणोपास्यं ब्रह्म, किन्तु न तदधिरोहति बुद्धिफलकम् । अधिकारिणः खलूत्पादयन्ति प्रमितिं वचनानि । प्रमितिजनको वेदः इति हि न्यायविदः । सम्प्रति गुरूपसन्नत्वादुपदेशपात्रं हृदयमित्येतदाह—सम्प्रतीत्यादिना । यस्मादेवमधिकारित्वसम्पादनमपेक्षितं, तस्मादधिकारितासामग्रीपौष्कल्यसम्पादनायेदमुच्यत इत्याह—अत एतदिति । अपरम् अन्तरङ्गसाधनत्वादुत्कृष्टं साधनमिति शेषः ।

---

१. 'नां प्र' ख. ग. पाठः. २. 'नो' ङ. पाठः. ३. 'द्विबलम् ।', ४. 'नि । सम्प्रति' ख. ग. पाठः.

असारे संसारे विरसपरिणामे तु विदुषां
वियोगो वैराग्यं द्रढयति वितन्वन् शमसुखम् ॥ २८ ॥

(ततः प्रविशति वैराग्यम् ।)

**वैराग्यम्** — (विचिन्त्य)

अस्राक्षीन्नवनीलनीरजदलोपान्तातिसूक्ष्मायत-
त्वङ्मात्रान्तरितामिषं यदि वपुर्नैतत् प्रजानां पतिः ।
प्रत्यग्रक्षरदस्रविस्रपिशितग्रासग्रहं गृह्णतो
गृध्रध्वाङ्क्षवृकांस्तनौ निपततः को वा कथं वारयेत् ॥ २९ ॥

---

**जडधियः** अविवेकिनः । विदुषां विवेकिनां तु कलत्रादिपरिग्रहस्य ममत्वेनोपार्जितस्य वियोगः विश्लेषः कालत्रयेऽपि दुःखनिदानमेवैतदिति निरूपणेन दृढतरविरक्तिद्वारा शमसुखं सम्पादयतीत्यर्थः ॥ २८ ॥

यस्मादेवं विवेकिनां वैतृष्ण्यमेव सर्वस्मात्, अतो विवेकसामग्र्यां सत्यां स्वयमेव वैराग्यं भवतीत्याह— **ततः प्रविशति वैराग्यमिति**[1] । वैराग्यं निर्वेदः । उक्तं च —

"असिद्धे क्वचिदाविष्टे सर्वस्मादपि वस्तुनः ।
व्यावृत्तिर्दोष[2]दर्शित्वाद् बुद्धेर्निर्वेद उच्यते ॥"

इति ।

वैराग्यस्वरूपं दर्शयति—**विचिन्त्येत्यादिना** । त्वगिन्द्रियतिरोहितं यथा भवति तथा यदि नास्राक्षीत् न सृष्टवानित्यन्वयः । तर्हि क्षुत्क्षाम-तान्तस्वान्ता ध्वांक्षादयो जक्षन्त्येवेत्यर्थः । अतः,

"मांसास्थिपूयविण्मूत्रमज्जासृक्स्नायुसंहतौ ।
देहे चेत् प्रीतिमाप्नोति भविता नरकेऽपि तत् ॥"

इति न्यायादशेषनरकवदतिकश्मल एवायं देह इत्यभिप्रायः ॥ २९ ॥

---

१. 'मित्यादिना । वै' ख. ग. पाठः. २. 'षशीलत्वात्' ख. घ. पाठः. ३. 'तदेव द' क. ङ. पाठः. ४. 'क्षान्त' ङ. पाठः.

अपिच,

सदा लोला लक्ष्मीर्विषयजरसाः प्रान्तविरसा
विपद्गेहं देहो महदपि धनं भूरि निधनम् ।
गुरुः शोको लोकाः सततमबलानर्थबहुला
तथाप्यस्मिन् घोरे पथि बत रता नात्मनि रताः ॥ १० ॥

सरस्वती—वत्स! एतद् वैराग्यं त्वामुपस्थितम् । तदेतत् सम्भावय ।

---

एवं शरीरनैःसार्यं प्रतिपाद्याधुना भोगसाधनविषयनिस्सारतां दर्शयति — अपिचेति । सदा लोला लक्ष्मीः अतिचञ्चला । न क्षणमप्येकत्र संवसतीत्यर्थः । विषयानुभवाज्जाता रसाः प्रीतिविशेषाः । प्रान्ते अवसाने विरसाः दुःखकराः । भोगसाधनत्वेन सम्मतवनितादिदेहोऽप्यापदां निलयः । धनमपि राजचोरादिभिर्विनाशबहुलम् । ननु तवैकस्यैवैतदिति चेत् तत्राह—गुरुः शोक इति । सप्तस्वपि लोकेषु निरूप्यमाणेषु ब्रह्मादितृणपर्यन्तप्राणिनां शोक एव गुरुर्भूयानित्यर्थः । अबला योषित् । अनर्थबहुला अनर्थस्वरूपैवेत्यर्थः । तथापीति । एवमनुभूयमाने सत्यप्यनर्थव्राते निसर्गसिद्धपरमानन्दप्रत्यगात्मानमक्लेशलभ्यमपि मनाङ् न वाञ्छति । अहो कष्टं वर्तत इत्यर्थः । उक्तं च —

"अध्यात्मादिपदार्थेभ्यो विविक्तं स्वात्मनि स्थितम् ।
तन्न पश्यत्यहो कष्टं दौर्भाग्यं दुष्टचेतसाम् ॥
प्रत्यक्षगोचरं देवं लोकं चातिप्रमादिनम् ।
दृष्ट्वा श्रुतिः शिरस्ताडमनुक्रोशति दुःखिता ॥
प्रत्यक्षतममप्येनं वितमस्कं स्वयं स्वतः ।
अहो कष्टं न पश्यन्ति कं यामः शरणं वयम् ॥"

इति ॥ १० ॥

एतद् वैराग्यं त्वामुपस्थितमिति । निरङ्कुशं तव सार्वत्रिक-

---

१. 'मात्रम', २. 'नच' ख. घ. पाठः. ३. 'सर्वलोकेष्वपि नि' क. पाठः. ४. 'महान् न' घ. पाठः

**मनः**— क्वासि पुत्रक ! ।

**वैराग्यम्**— (उपसृत्य) अहं भो ! अभिवादये ।

**मनः**—वत्स ! जातमात्रेण त्वया त्यक्तोऽस्मि । परिष्वजस्व माम् ।

**वैराग्यम्**— (तथा करोति) ।

**मनः**— वत्स ! त्वद्दर्शनात् प्रशान्तो मे शोकावेगः ।

**वैराग्यम्**— तात ! कोऽत्र शोकावकाशः । यतः,

पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव स्रोतसां
मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव[1] ।
संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां यदा
सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ॥

---

वैराग्यमुत्पन्नमित्यर्थः । तत् तस्मात् । एतद् वैराग्यम् । सम्भावय सम्यग् भावय । अचञ्चलतया दार्ढ्यमेव सम्पादयेत्यर्थः ॥

**जातमात्रेणे**ति । मद्व्यापारासहिष्णुना त्वया परित्यक्तोऽहमित्यर्थः ॥

**तात कोऽत्र शोकावकाश** इति । अस्थाने महान् सम्भ्रम एवायमित्यर्थः ॥

अस्थानतामेव स्थापयति—**यतः पान्थानामि**त्यादिना । पुष्करे व्योम्नि । सांयात्रिकाणां पोतवणिजाम् । दूरवियोग एवेति । अत्यर्थं निश्चितवियोग एव पित्रादिसंयोग इत्यर्थः । तदुक्तम्—

"संयोगा विप्रयोगान्ताः पतनान्ताः समुच्छ्रयाः ।
क्षयान्ता निचयाः सर्वे मरणान्तं च जीवितम् ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥"

---

१. 'थां महायात्रिकाणां पो' क. पाठः.

**मनः**—(सानन्दम्) देवि ! एवमेतत्, यदाह वत्सः । सम्प्रति हि—

नार्यस्ता नवयौवना मधुकरव्याहारिणस्ते द्रुमाः
प्रोन्मीलन्नवमल्लिकासुरभयो मन्दास्त एवानिलाः ।
अद्योदात्तविवेकमार्जिततमस्तोमव्यलीकं पुन-
स्तानेतान् मृगतृष्णिकार्णवपयःप्रायान् मनः पश्यति ॥ ३२ ॥

**सरस्वती**—वत्स ! यद्यप्येवं, तथापि गृहिणा मुहूर्तमप्यनाश्रमधर्मिणा न भवितव्यम् । तदद्यप्रभृति निवृत्तिरेव ते सहधर्मचारिणी ।

**मनः**—(सलज्जम्) यदादिशति देवी ।

---

इति । अतो विवेकिनां शोकगन्धस्याप्यवकाशाभावात् कुटुम्बचिन्तापरिहारेणास्मिन् संसारे वान्तौदन इव निर्वेदेन भाव्यमिति भावः[1] ॥ ३१ ॥

सम्प्रति स्वाधीनविवेकादिफलमनुसन्दधाति—सम्प्रतीत्यादिना । **नार्यस्ता** इति । भोगसाधनत्वेन पूर्वमूरीकृता वनितादयः । अद्य इदानीम्[2] । उदात्त उत्कटो विवेकः तेन मार्जितं विशोधितं तमसां स्तोमस्तमस्तोमः पुञ्जं तदेव व्यलीकम् अनृतम् । अथवा व्यलीकमिति तिरोधायकं मलमुच्यते । सम्यङ्मार्जितमलं यन्मनस्तदिदम् । तानेतान् विषयानसत्कल्पान् पश्यतीत्यर्थः ॥ ३२ ॥

**सलज्ज**मिति । पूर्वं प्रवृत्त्यां पक्षपातप्रणयप्रसङ्गेनाज्ञानिना मया अवधीरिता धर्मपत्न्यपि सेयं[3] निवृत्तिरित्यात्मापराधनिरूपणेन सञ्जातलज्जाभरनम्रकन्धर इत्यर्थः ।

---

१. 'मित्यर्थः' ख. घ. पाठः. २. 'इदानीं स्वा' ङ. पाठः. ३. 'यमित्या' ख. घ. पाठः.

**सरस्वती**—शमदमसन्तोषादयश्च पुत्रास्त्वामुपचरन्तु। यमनियमादयश्चामात्याः। विवेकोऽपि त्वदनुग्रहादुपनिषद्देव्या सह यौवराज्यमनुभवतु। एताश्च मैत्र्यादयश्चतस्रो भगिन्यो भगवत्या विष्णुभक्त्या तव प्रसादनाय प्रहितास्ताः सप्रसादमनुमानय।

**मनः**—यदादिशति देवी। मूर्ध्नि निवेशिताः सर्वा एवाज्ञाः। (इति सहर्षं पादयोः पतति।)

**सरस्वती**—यमनियमादयश्चामात्याः सादरमायुष्मता द्रष्टव्याः। एतैरेव सहायुष्मान् साम्राज्यमनुतिष्ठतु। त्वयि च स्वास्थ्यमापन्ने क्षेत्रज्ञोऽपि स्वां प्रकृतिमापत्स्यते। यतः—

---

शमः अन्तःकरणोपशमः। दमो नाम बहिष्करणोपशमः। सन्तोषो नाम सञ्जातालम्प्रत्ययत्वम्। उक्तं च—

"यदृच्छालाभतो नित्यमलं पुंसो भवेदिति।
या धीस्तामृषयः प्राहुः सन्तोषं सुखलक्षणम्॥"

आदिशब्देन तपःस्वाध्यायादयो गृह्यन्ते। वैराग्यानन्तरभावित्वात् पुत्राः। शमदमादयस्त्वामुपचरन्तु परिचरन्त्वित्यर्थः। यमादयस्त्वारादुपकारकत्वादमात्यवदमात्याः। मोक्षराज्याभिषेकप्राप्तेः पूर्वरूपत्वाद् विवेक एव युवराज इत्यर्थः॥

यमनियमादय इत्यादिशब्देन प्रत्याहारादयो गृह्यन्ते। एतैरिति। आ मोक्षादवश्यानुष्ठेया एवैत इत्यर्थः। सम्राड्भावः साम्राज्यमपराधीनतयात्मविषय एवावस्थितिः। तव स्वास्थ्यात् लाभान्तरमप्यस्तीत्याह—क्षेत्रज्ञोऽपीति। स्वां प्रकृतिं निसर्गसिद्धपरमात्मस्वरूपमेव भवतीत्यर्थः।

---

१. 'व्यभेदीत्य' क. पाठः.

त्वत्सङ्गाच्छाश्वतोऽपि प्रभवलयजरोपप्लुतो बुद्धिवृत्ति-
ष्वेको नानेव देवो रविरिव जलधेर्वीचिषु व्यस्तमूर्तिः ।
तूष्णीमालम्बसे चेत् कथमपि वितता वत्स ! संहृत्य वृत्ती-
र्भात्यादर्शे प्रसन्ने रविरिव सहजानन्दसान्द्रस्तदात्मा
[॥ ३३ ॥

तद् भवतु । ज्ञातीनामुदककृत्याय नदीमवतरामः ।

**मनः** — यदाज्ञापयति देवी ।

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीकृष्णमिश्रयतिविरचिते प्रबोधचन्द्रोदये
वैराग्यप्रादुर्भावो नाम पञ्चमोऽङ्कः ॥

---

निजरूपप्राप्तिमेव दर्शयति — त्वत्सङ्गादित्यादिना । यथैकोऽप्यादित्योऽनेकवीचीतरङ्गघटघटीकूपतटाकनदनदीसरःसमुद्राद्युपाधिगतसलिलसम्बन्धादनेकवद् विभाव्यते, एवं त्वत्सम्बन्धादखण्डैकरसस्वरूपोऽपि परमात्मा बुद्धिवृत्त्युपाधिभेदसम्बन्धाद्व्यस्तमूर्तिर्विभिन्ननिजरूप इव कल्पितः । त्वं चेत् कथमपि

"उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद् भवेदपरिखेदतः ॥"

इति न्यायाद् बहिरङ्गत्वमपहाय प्रत्यङ्मात्रशरणतयाचञ्चलं वर्तसे चेत्, तर्ह्ययमपि परमात्मा अशेषानर्थविनिर्मुक्तः परिपूर्णपरमानन्दब्रह्मैव स्यादित्यर्थः ॥

इति श्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण गोविन्दामृत-
भगवता कृते नाटकाभरणे पञ्चमोऽङ्कः ॥

---

१. 'विगतमे', २. 'न्याद्विभिन्नमूर्तिर्व्यस्तनिज' क. पाठः.

## अथ षष्ठोऽङ्कः ।

(अतः परं जीवन्मुक्तिर्भविष्यति ।)

(ततः प्रविशति शान्तिः ।)

**शान्तिः**— आदिष्टास्मि महाराजविवेकेन । यथा वत्से ! विदितमेव भवत्या किल—

अस्तं गतेषु तनयेषु निलीनमोहे
वैराग्यभाजि मनसि प्रशमं प्रपन्ने ।

---

एवं तावत्

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं मनः ॥"

इति न्यायेन विवेकादिसहकृतवैराग्यशालिमनःप्रसादसम्प्राप्योऽसौ पुरुषार्थः इत्यनन्तरातीताङ्कशिरसि निर्दिष्टम् । अधुना तु सम्यग्ज्ञानोदयसमय एव शरीरपात इत्यङ्गीकारे पुरुषार्थप्राप्तिसाधनसम्यग्ज्ञानप्रकाशकशास्त्राचार्यादीनामभावप्रसङ्गात्, तदनङ्गीकारे च जगदान्ध्यप्रसङ्गाद् दग्धपटन्यायेन बाधितानुवृत्त्या वा प्रयुक्तशरवज्जीवन्मुक्तिप्रतिपादकशास्त्राणां च भूयसां सम्भवात् तदवष्टम्भेनानुभवानुसारेण च जीवन्मुक्तः कोऽप्यस्तीत्यभिप्रायेण उत्तरप्रघट्टकतात्पर्यमाह—**अतः परं जीवन्मुक्तिर्भविष्यतीति** ।

उक्तं तावत् "मानिन्याश्चिरविप्रयोगजनितासूयाकुलाया भवेदि"-त्यत्र शान्त्याद्यनुनीतोपनिषद्देवीसम्प्रयोगाद् विवेकस्यावस्थात्रयनिर्मुक्ततुरीयब्रह्माकारसम्यग्ज्ञानदिवाकरोऽविद्यातमःपटलघस्मरः समुदयमासादयिष्यतीति । तत्राधुना शान्त्यादेरानुकूल्येन उपनिषत्सङ्गमाद् विद्योत्पत्तिप्रकारं वक्तुमुपक्रमते—**ततः प्रविशति शान्तिरि**त्यादिना ।

महाराजविवेकस्यादेशप्रकारमेवानुसन्धत्ते—**यथा वत्स** इत्यादिना ।

**अस्तं** नाशम् । **तनयेषु** कामक्रोधादिषु । **निलीनमोहे** प्रच्छन्नतया

---

१. 'क्तिः मु' घ. पाठः. २. 'तथा' ख. घ. पाठः. ३. 'त्पादनस' क. ख. ङ. घ. पाठः. ४. 'द् । दग्ध' ख. घ. पाठः.

क्लेशेषु पञ्चसु गतेषु शमं समीहा
तत्त्वावबोधमभितः पुरुषस्तनोति ॥ १ ॥

तद् भवती त्वरिततरं देवीमुपनिषदमनुनीय मत्स-काशमानयत्विति । (विलोक्य सहर्षम्) एषाम्बा सहर्षं किमपि मन्त्रयन्ती इत एवाभिवर्तते ।

(ततः प्रविशति श्रद्धा ।)

**श्रद्धा**—अये, अद्य खलु चिरेण राजकुलमवलोक्य पीयूषेणेव लोचने पूर्णे ।

असतां निग्रहो यत्र सन्तः पूज्याः शमादयः ।
आराध्यते जगत्स्वामी वश्यैर्देवानुजीविभिः ॥ २ ॥

---

वर्तमाने सति । मनसि च प्रशान्ते । क्लेशेष्वविद्यास्मितारागद्वेषाभिनिवेशलक्षणेषु शमं गतेषु । अधुना पुरुषः क्षेत्रज्ञः । तत्त्वावबोधमभितः तत्त्वज्ञानस्य साधनमभितः सर्वतो दिशमन्विष्य सम्यगीहां कुर्वन् वर्तत इत्यर्थः ॥ १ ॥

तद्भवतीति । तस्मात् सानुनयमानेया मन्मानिनीत्यर्थः । यथा रन्ध्रान्वेषी मोहोऽस्मान् नाभिभवेत्, तथा यतनीयमित्यर्थः । एवं विवेक-नियोगादुपनिषदमानेतुं प्रस्थिता शान्तिर्मार्गमध्ये विवेकानयनाय पुरुष-प्रेषितां गच्छन्तीं श्रद्धां ददर्शेत्याह—विलोक्येत्यादिना ।

अद्य खल्विति । राजकुलमित्युपलक्षणम् । सकलप्रपञ्चविलयेन तदधिष्ठानतया गम्यमानमद्वितीयमात्मानमालक्ष्य लोचने श्रुतिस्मृतिलक्षणे नेत्रे कृतार्थे इति । राज्ञः सकाशं गत्वा तमवलोक्य लोचने पूर्णे कृतार्थे भविष्यत इत्यर्थः ।

राजकुललक्षणमाह—**असताम्**िति । असतां मोहादीनाम् । वश्यैरप्रमादिभिरिन्द्रियैः । अनुजीविभिः राज्यवर्तिभिः आत्मोपजीविभिः श्रोत्रादिभिरिन्द्रियैः प्रशान्तैः पूज्यत इत्यर्थः ॥ २ ॥

---

१. 'अम्बा अम्बा' इति मुद्रितपाठः.

शान्तिः — (उपसृत्य) अम्ब ! किं मन्त्रयन्ती क्व प्रस्थितासि ।

श्रद्धा — (अये अद्येत्यादि पठति ।)

शान्तिः — अथ मनसि कीदृशी स्वामिनः पुरुषस्य प्रवृत्तिः ।

श्रद्धा — यादृशी वध्यस्य निग्राह्यस्य च भवति ।

शान्तिः — तत् किं स्वाम्येव साम्राज्यमलङ्करिष्यति ।

श्रद्धा — एवमेतत्, यद्यात्मानं प्रतिसंधत्ते । ततो देवः स्वराट् सम्राड् वा भवति ।

---

किं मन्त्रयन्तीति । प्रश्नस्योत्तरमाह — अये अद्येत्यादि पठतीति । पुरुषाज्ञया विवेकमालोकयितुं गमिष्यत इत्यर्थः ।

ततः प्रविशति शान्तिरिति । अथवा बहुलविषयेषु सात्त्विकेषु च विषयेष्वित्येवं परापररूपवैराग्यं परिपूर्णमित्युक्तम् । अधुना सत्त्वोन्मेषरूपसमाधिसुखादीनामपि परमानन्दप्राप्तिपरिपन्थित्वेन तेष्वपि विरक्तत्वात् स्वयमेव सर्वव्यापारोपशमरूपा शान्तिः प्रवर्तत इत्याह — ततः प्रविशति शान्तिरिति । अद्येत्यादि पठतीति । अयं भावः — सम्प्रति निखिलनिगमप्रामाण्यं निर्मितमतोऽहमपि चरितार्थेति ।

ननु यद्येवं प्रामाण्यं प्रतिष्ठितं, तर्हि पुरुषव्यापारः साकल्येन सुसंवेद्य इति पृच्छति — अथेति ॥

वध्यस्य वधार्हस्य । निग्राह्यस्य निगलबन्धयोग्यस्य । तादृक्कृतमित्यर्थः ॥

यद्यात्मानं प्रतिसन्धत्ते इति । प्रत्यक्प्रवणताप्रणयपरवशश्चेत्, तर्हि अयं स्वराट् । यस्यान्यो राजा नास्ति, स्वयमेव च राजा यः, स स्वराडित्यर्थः । परिपूर्णाखण्डब्रह्मरूपेणात्मद्युतिसन्दोहैः सर्वतो देदीप्यमानः सम्राडित्यर्थः । वाशब्दस्त्ववधारणे ।

**शान्तिः**—अथ देवस्य मायायां कीदृशोऽनुग्रहः।

**श्रद्धा**—ननु निग्रह इति वक्तव्ये कथमनुग्रहः शक्यते वक्तुम्। देवोऽपि हि सर्वानर्थबीजमियं माया सर्वथा निग्राह्येति मन्यते।

**शान्तिः**—यद्येवं कुतस्तर्हीदानीं राजकुलस्य स्थितिः।

**श्रद्धा**—शृणु वत्से!

नित्यानित्यविचारणा प्रणयिनी वैराग्यमेकं सुहृत्
सन्मित्राणि यमादयः शमदमप्रायाः सखायो मताः।

नन्वनादिभवपरम्परापरिलालिता खल्वियं माया, अतो दुस्त्यजा, कथमेनां त्यक्ष्यति पुरुष इत्यभिप्रायेण पृच्छति—**अथ देवस्य मायायामिति**॥

**ननु निग्रह** इति। यस्मान्मामेवाश्रित्याप्यनर्थव्रातमेवानभिजाता निरन्तरमापादयति, अतः समूलमेनामुन्मूल्य सुखीभवामीत्यभिप्रायो देवस्य। अतस्त्वच्चोद्यमपि अनुपपन्नमित्यर्थः॥

पुरुषोद्यमस्तावदेवं भवतु, किन्तु विवेकाधीना एव खलु फलप्राप्तिः। अतो विवेकाद्यानुकूल्यं कथमिति मन्वाना पृच्छति—**यद्येवं कुतस्तर्ही**त्यादिना॥

**सर्वथा तावत्**

"सम्बोधनीय एवासौ सुप्तो राजेव वन्दिभिः।"

इति न्यायादस्माभिरयमात्मा सम्यग्ज्ञानसम्पादनेन प्रबोध्य स्वाराज्येऽभिषेक्तव्य इति कृतव्यवसाय एव राजा विवेक इत्याह—**शृणु वत्से** इत्येवमादिना। प्रणयिनी भार्या। वैराग्यमेकं प्रधानं सुहृत् प्रत्युपकारनिरपेक्षतयोपकारपरमित्यर्थः। सम्पद्विपत्स्वपि तुल्यस्नेहाः सन्तः **सन्मित्राणि यमादयः**। आदिशब्देन नियमादयो गृह्यन्ते। **शमदम**-

१. 'त्वाभिजातमनभि' ग. पाठः.

मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा बला-
दुच्छेद्या रिपवश्च मोहममतासङ्कल्पसङ्गादयः ॥ ३ ॥

शान्तिः—अथ धर्मे स्वामिनः कीदृशः प्रणयः ।

श्रद्धा—पुत्रि! वैराग्यसन्निकर्षात् प्रभृति नितान्तमिहामुत्रफलभोगविरस एव स्वामी । तेन,

स नरकादिव पापफलाद्भयं भजति पुण्यफलादपि नाशिनः ।
इति समुज्झितकामसमन्वयं सुकृतकर्म कथञ्चन मन्यते ॥ ४ ॥

प्रायाः सन्तोषप्रभृतयः । सखायोऽवियुक्तगतयः । मैत्र्याद्याः मैत्रीकरुणामुदितोपेक्षाप्रभृतयः । परिचारिकाः धात्र्यः । मुमुक्षा मोक्षेच्छा । सहचरी समानात्मप्रतिपत्तिशीला । बलात् प्रसह्य । एतावन्तं कालं कृतापराधजालमालक्ष्य तदनुसारेण कारागृहे दृढं बद्ध्वा निष्पीड्यालक्तकरसवत् प्राणरससंग्रहणेनोन्मूलयितव्या महामोहादय इत्येवं कृतव्यवसाया विवेकादय इत्यर्थः ॥ ३ ॥

एवंविधस्यापि भोक्तृत्वाभिनिवेशेन कर्तृत्वाद्यारोपणेन क्रियायामभिनिवेशोऽस्ति नवेति मन्वाना पृच्छति—अथ धर्मे स्वामिन इत्यादिना ।

वैराग्यसन्निकर्षात् प्रभृतीति ।

"ब्रह्मादीनां शरीराणि श्वसूकरशरीरवत् ।
यतो जिहासितान्येव तस्माद्धर्मेऽपि पाप्मगीः ॥"

इति न्यायादधर्मवद्धर्मस्याप्युपेक्षणीयत्वं मोक्षविरोधित्वाविशेषादिति मन्यते पुरुषः । तेनेति वैराग्यबाहुल्यहेतुनेत्यर्थः ।

यद्येवं काम्यप्रतिषिद्धयोर्मोक्षविरोधित्वात् परित्यागो भवतु, नित्यस्य तु विहितत्वात् परित्यागोऽनुपपन्न इत्याशङ्क्याह—सुकृतकर्मेति । छर्दितान्न इव ब्रह्मलोकपर्यन्तभोगेषु विरक्तत्वात् कर्मप्रयोजनाभावात्, यद्यपि कर्मणां साकल्येन परित्यागः प्राप्तः, तथापि गृहमेधित्वात् कथञ्चनानास्थमेव स्वकर्म कुर्वन् वर्तत इत्यर्थः ॥ ४ ॥

१. 'लक्ष्य'. २. 'चर' ग. पाठः. ३. 'स्वाद कथञ्चना' ख. घ. पाठः.

किन्त्वसौ प्रत्यक्प्रवणतां स्वामिनो विचिन्त्य कृतं कर्तव्यमिवात्मानं मत्वा स्वयमेव धर्मः श्लथव्यापारोऽभूत् ।

**शान्तिः**—अथ याnुपसर्गान् गृहीत्वा महामोहो निलीय स्थितस्तेषां को वृत्तान्तः ।

**श्रद्धा**—पुत्रि! तथा दुरवस्थां गतेनापि महामोहहतकेन स्वामिनः प्ररोचनाय मधुमत्या विद्यया सहोपसर्गाः प्रेषिताः। अयमभिप्रायः—यद्येतेष्वासक्तः स्वामी विवेक उपनिषच्चिन्तामपि न करिष्यतीति ।

---

ननु तर्हि "कर्मणा बध्यते जन्तुः" इति न्यायात् तदवस्थ एव बन्ध इत्याशङ्क्याह—किन्त्वित्यादिना ।

"प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥"

इति न्यायाद् बहिरङ्गत्वपरिहारेण प्रत्यगात्मानुसन्धानाभिमुख्यमापाद्य धर्मः स्वयमेव विलयं प्राप्त इत्यर्थः ॥

एव तावत् पूर्णपुरुषार्थप्राप्तये पुष्कलोपकरणोपहित एव पुरुष इत्यभाणि । अधुना

"श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ॥
संन्यासिनोऽपि दृश्यन्ते दैवसन्दूषिताशयाः ॥"

इति न्यायात् पामरप्राणिपरिगृहीतोऽपि निर्वीर्यो मोहः किमरुन्तुदो वा न वेति मन्वाना पृच्छति शान्तिः—अथ यानुपसर्गानित्यादिना ।

**तथा दुरवस्थां गतेनेति** । कष्टतरां दशां गतेनापि । प्ररोचनाय चित्तविलोभनार्थम्[1] । हरमेखलादिग्रन्थप्रसिद्धा मन्दमतिप्रक्षोभणार्थे त्वैन्द्रजालिकार्थप्रकाशपटीयसी विद्या मधुमतीति भण्यते । अथवा मधुमतीति भोगभूमिर्भाष्यते । योगशास्त्रप्रसिद्धा योगाभ्यासपरिपाकसूचिका काचन दशा परमानन्दरूपत्वान्मधुमतीत्यभिधीयते । तया सह योगोपसर्गाः प्रत्यूहनिवहाः अणिमाद्यैश्वर्यव्याजाः । अथवा लयविक्षेपकषायसमाधिसुखाभि-

---

१. 'र्थम् । मारमेखला' ग. घ. पाठः. २. 'परत्वा' ग. घ. पाठः.

**शान्तिः**—ततस्ततः ।

**श्रद्धा**—ततस्तया सह तैर्गत्वा कापि स्वामिन ऐन्द्रजालिकी विद्योपदर्शिता । तथाहि,

शब्दानेष शृणोति योजनशतादाविर्भवन्ति स्वत-
स्तास्ता वेदपुराणभारतकथास्तर्कादयो वाङ्मयाः ।
ग्रथ्नाति स्वयमिच्छया शुचिपदैः शास्त्राणि काव्यानि वा
लोकान् भ्राम्यति पश्यति स्फुटरुचो रत्नस्थलीर्मैरवीः ॥ ५ ॥

मधुमतीं च भूमिमापन्नः स्थानाभिमानिनीभिर्देवताभिरुपच्छन्द्यते । भो इहोपविश्यताम् । नात्र जन्ममृत्यू ।

---

लाषा योगान्तरायाः । लयः सुषुप्तम् । विक्षेपो मनोराज्यादिकरणम् । कषायो नाम विक्षिप्तस्यापि चित्तस्य ध्येयार्थास्थिरतानिमित्तं पापम् । समाधिसमयसुखाभिलाषोऽपि पुरुषार्थविरोधीत्येते योगान्तराया इत्यर्थः ।

अथवा । प्रतिभाश्रवणादयः प्रत्यूहाः । तथाचाहुः

"प्रतिभाश्रवणो दैवो भ्रमावर्तौ तथापरे ।
पञ्चैते योगिनां योगविघ्नाय नरकोदयाः ॥"

इति । विवेकमुपनिषदं च प्रस्मरति पुरुष इत्यर्थः ।

**कापीति** । अविचारितरमणीयेत्यर्थः ।

**मैरवीः** मेरुसम्बन्धिनीः ॥ ५ ॥

एवं तावदुपसर्गाणां विप्रलम्भकत्वप्रकारः प्रादर्शि अधुना मधुमतीविलोभनप्रकारं दर्शयति **मधुमतीं च भूमिमित्यादिना** । मधुमतीं भोगोपकरणवतीं भोगभूमिमिति यावत् । आपन्नः प्राप्तः । उपासकः पुरुष इति शेषः । स्थानाभिमानिनीभिः पुष्कलभोगोप[२]सम्पन्नहिमवत्पृष्ठादिस्थानाभिमानिनीभिः विद्याधरगन्धर्वभुजङ्गचारणादिदेवताभिः उप-

---

१. 'कटुको' क. ग. पाठः. २. 'पकरणस' क. पाठः,

अनुपाधिरमणीयोऽयं देशः । एष त्वामुपस्थितो विविधविलासलावण्यपुण्यमयो मङ्गलार्थव्यग्रपाणिः प्रणयपेशलो विद्याधरीजनः । तदेहि, यतोऽत्र —

कनकसिकतिलस्थलाः स्रवन्तीः
पृथुजघनाः कमलानना वरोरूः ।
मरकतदलकोमला वनाली-
र्भज निजपुण्यजितांश्च सर्वभोगान् ॥ ६ ॥

शान्तिः — ततस्ततः ।

श्रद्धा — पुत्रि! तदाकर्ण्य मायया श्लाघ्यमेतदित्युक्तम् । मनसा चानुमोदितम् । सङ्कल्पेन प्रोत्साहितम् । स्वामी सम्प्रति सन्मित्रपथमिवापन्नः ।

शान्तिः — (सखेदं) हा धिक् हा धिक् । पुनरपि तामेव संसारवागुरामपि पतितः स्वामी ।

---

च्छन्द्यते प्रतार्यते । उपच्छन्दनप्रकारमेव दर्शयति — भो इहोपविश्यतामित्यादिना । अनुपाधीति । उपाधिमन्तरेण निसर्गसुन्दरोऽयं देश इत्यर्थः ॥

स्रवन्तीः सरितः । उपासकानां बुद्धिलाघवपरीक्षणाय प्रत्यूहभेदाः समुत्तिष्ठन्तीत्यर्थः । उक्तञ्च —

"वासुदेवे मतिर्यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय! देवेन्द्रत्वादिकं फलम् ॥"

इति ॥ ६ ॥

प्रोत्साहितं सन्नाहितम् ॥

संसारवागुरा संसार एव वागुराश्चमृगबन्धनी । संसारयन्त्रजालकमिति यावत् ॥

---

१ बे मनो य' क. ड. पाठः.

**श्रद्धा** — नखलु नखलु ।

**शान्तिः** — ततस्ततः ।

**श्रद्धा** — ततः पार्श्ववर्तिना तर्केण तान् सर्वान् क्रोधावेशकषायितनयनमालोक्याभिहितः स्वामी । स्वामिन् ! किमेवमेभिर्विषयामिषग्रासगृध्नुभिरास्थानीधूर्तबकैः पुनरपि तेष्वेव विषनविषयाङ्गारेषु निपात्यमानमात्मानं नावबुध्यसे । ननु भोः,

भवसागरतारणाय यासौ
सुचिराद् योगतरीस्त्वयाश्रिता ।
अधुना परिमुच्य तां मदात
कथमङ्गारनदीं विगाहसे ॥ ७ ॥

---

एवं तावदनेकजन्मार्जितसुकृतसञ्चयेनेश्वरप्रसादादारादुपकारकेष्वग्निहोत्रादिषु, सन्निपत्योपकारकेषु च शमादिषु वैराग्यान्तेष्वन्तरङ्गसाधनेषु गोपालकानियोगाद् अयमधिकारी व्यापृतवान् इत्यभाणि । अधुना त्वधीरतया पराक्त्वे प्राप्ते तन्निरसनाय गोपालेनाभिहित इत्याह — **पार्श्ववर्तिनेति** । अभिधानप्रकारमेवावेदयति — स्वामिन् ! किमेभिरित्यादिना । एभिरेवं प्रदर्शितविषयपक्षपातिभिरिन्द्रियारातिभिः । आस्थानी राजधानी । तत्र स्वामिप्रयोजनमनवेक्ष्य स्वप्रयोजनपराः आस्थानीधूर्तास्त एव बकवद् निर्भयमेवात्मभरत्वाद् बकाः तैः । स्पर्शमात्रेण नाशकरत्वाद् विषया अङ्गाराः तेष्वित्यर्थः ।

**भवसागरेति** । भवः संसारः सागरवद् दुरुत्तरत्वात् सागरः । तस्योलङ्घनाय । सुचिरादनेकजन्मार्जितपुण्यनिवहैः कथंचिदीश्वरप्रसादलब्धयोग एव संसारसमुद्रतरणसाधनत्वात् तरीः तां विहाय विषयाभिमुख्यमनुपपन्नमित्यर्थः । अस्य खलु दुर्निरूपस्य संसारस्यायं स्वभावः । यद् बहिर्मुखानां तमोजुषां संसारः बन्धनमेव सन्तनोति । प्रत्यक्प्रवणानां तु

**शान्तिः** — ततस्ततः ।

**श्रद्धा** — ततस्तद्वचनमाकर्ण्य स्वस्ति विषयेभ्य इत्यभिधायावधीरिता मधुमती ।

**शान्तिः** — साधु साधु। इदानीं क्व प्रस्थिता भवती।

**श्रद्धा** — आदिष्टाहं स्वामिना यथा विवेकं द्रष्टुमिच्छामीति ।

**शान्तिः** — तत् त्वरतां भवती ।

**श्रद्धा** — तदहं राजसन्निधिं प्रस्थिता ।

**शान्तिः** — अहमपि महाराजेनोपनिषदमानेतुमादिष्टा। तद् भवतु, स्वामिनियोगं सम्पादयावः ।

(इति निष्क्रान्ते ।)

**प्रवेशकः ।**

---

मोक्षमपीत्यतो न कदाचिदपि बाह्यिरत्वं यथा भवति तथा निरूपणेन भाव्यमिति भावः । उक्तं च —

"प्रत्यग्दशां विमोक्षाय संसाराय पराग्दशाम् ।
अपामार्गलतेवायं विरुद्धफलदो नृणाम् ॥"

इति ॥ ७ ॥

स्वस्ति विषयेभ्य इति । यं कञ्चित् कामुकमासाद्य तद्विलोभनाय यथेष्टं गम्यतामित्यनुज्ञा दत्तेत्यर्थः ॥

आस्तां तावदियं चिन्ता । अधुना किं व्यवसितं भवत्येति पृच्छति — इदानीं क्व प्रस्थिता भवतीति ।

एवं तावद् विवेकसकाशं प्रेषिता पुरुषेण श्रद्धेत्युक्तम्। इदानीं 'नासूचितस्य प्रवेशः' इति न्यायाद् उक्तविशेषणोऽथ पुरुषः स्वयं प्रवर्तेत

---

१. 'भवितव्यमि' घ. पाठः. २. 'दाय विलोभितं य' ग. पाठः.

(ततः प्रविशति पुरुषः।)

**पुरुषः**—(विचिन्त्य सहर्षम्) अहो माहात्म्यं देव्या विष्णुभक्तेः। यत्प्रसादान्मया,

तीर्णाः क्लेशमहोर्मयः परिहृता भीमा ममत्वभ्रमाः
शान्ता मित्रकलत्रबन्धुमकरग्राहग्रहग्रन्थयः।
क्रोधौर्वाग्निरपाकृतो विघटितास्तृष्णालताविस्तराः
पारेतीरमवाप्तकल्पमधुना संसारवारान्निधेः॥ ८॥

(ततः प्रविशत्युपनिषच्छान्तिश्च।)

**उपनिषत्**—सखि! कथं तथा निरनुक्रोशस्य स्वामिनो मुखमालोकयिष्यामि, येनाहमितरजनयोषेव सुचिरमेकाकिनी परित्यक्ता।

**शान्तिः**—देवि! कथं तथाविधविपत्पतितो देव उपालभ्यते।

**उपनिषत्**—सखि! न दृष्टा त्वया मे तादृशी अवस्था, येनैवं ब्रवीषि। शृणु—

बाह्वोर्भग्ना दलितमणयः श्रेणयः कङ्कणानां
चूडारत्नग्रहनिकृतिभिर्दूषितः केशपाशः।

---

इत्याह—ततः प्रविशति पुरुष इति॥

और्वाग्निर्बडवामुखाग्निः। अवाप्तकल्पमिति। विवेकेन सहोपनिषदागमनमेव केवलमपेक्षितमित्यर्थः॥ ८॥

निरनुक्रोशस्य अनुकम्पारहितस्य। इतरजनयोषा असंस्कृतजनवनिता॥

चूडारत्नं शिरोभूषणमणिः। स्वयंप्रकाशसान्द्रानन्दपरमार्थलक्षणं रत्नं मया सततलालितं मद्धनमित्यर्थः। तस्य ग्रहणं स्वमतानुसारेणान्य-

कैः कैर्नाहं हतविधिबलादीहिता दुर्विदग्धै-
र्दासीकर्तुं सपदि दुरितैर्दूरसंस्थे विवेके ॥ ९ ॥

**शान्तिः** — सर्वमेतन्महामोहस्य दुर्विलसितम्। नात्र देवस्यापराधः। तेन हि तथा मनः कामादिद्वारेण प्रबोधयता त्वत्तो दूरीकृतो विवेकः। एतदेव च कुलस्त्रीणां नैसर्गिकं शीलं यद् विपन्मग्नस्य स्वामिनः समयप्रतीक्षणमिति। तदेहि, दर्शनेन प्रियालापेन च सम्भावय देवम्। सम्प्रत्यपहता विद्विषः। सम्पूर्णास्ते मनोरथाः।

**उपनिषत्** —सखि! संप्रत्यागच्छन्ती वत्सया गीतयाहं रहस्युक्ता यथा—भर्ता स्वामी च पुरुषस्त्वया यथाप्रश्नमुत्तरेण सम्भावयितव्यः यथा प्रबोधोत्पत्तिर्भविष्यतीति। तत् कथं गुरूणामध्यक्षं धाष्टर्यमवलम्बिष्ये

---

थीकृत्यानयनम्। तेन निकृतयः[1] दुष्टाः तार्किकादयः तैः दूषितः विरुद्धार्थकल्पनयान्यथीकृत इत्यर्थः। कैः कैरिति। किं बहुना, सर्वैरपि पापिष्ठैः स्वमतानुगुण्येनाहमाकुलीकृतेत्यर्थः। केशपाश इति वाक्यसमूहस्तत्त्वमस्यादिः ॥ ९ ॥

न खल्वयं विवेकापराधः। किन्तु मोहविलसितमित्याश्वासयति शान्तिः— सर्वमेतदित्यादिना[2]। मोहविलसितत्वमेव दर्शयति — तेन हि तथेति। तेन महामोहेन। तथा अशुचिनिचयनिर्मितयोषिदादिविषयेषु रमणीयत्वादिसम्भावनयेत्यर्थः। किञ्च, आभिजात्यमात्मनो विद्यमानं स्त्रीस्वभावानुवर्तनेन न प्रस्मर्तव्यमित्याह — एतदेव चेत्यादिना[3]। उत्तमस्त्रियाः सर्वावस्थातोऽपि पतिरुपास्य एवेति भावः ॥

भवतु तर्हि। किन्तु त्वया सहागन्तुमुद्युक्तां मामालक्ष्य मत्सुता भगवद्गीता रहसि कञ्चिदर्थं समर्थितवतीत्याह—सखि! सम्प्रतीत्यादिना। तदेव दर्शयति यथा—भर्तेत्यादिना। "नापृष्टः कस्यचिद् ब्रूयादि"ति

---

१. 'यः तैः' ख. पाठः. २. 'र्थः। न खल' क. ग. पाठः. ३. 'स्त्रिया' ग. पाठः.

शान्तिः — देवि! अविचारणीयमेतद् भगवत्या वाक्यम् । अयमेव चार्थो देव्या भगवत्या विष्णुभक्त्या विवेकस्वामिने निरुक्तः । तदेहि, सम्भावय दर्शनेन भर्तारमादिपुरुषं च ।

उपनिषत् — यथा वदति प्रियसखी । (इति परिक्रामति)

(ततः प्रविशति राजा श्रद्धा च ।)

राजा — अयि वत्से! अपि द्रक्ष्यति शान्तिः प्रियामुपनिषदम् ।

श्रद्धा — देव! गृहीतोद्देशैव शान्तिर्गता । कथं तां न द्रक्ष्यति ।

राजा — कथमिव ।

श्रद्धा — देव! प्रागेव कथितमेतद् देव्या विष्णुभक्त्या ।

---

न्यायात् प्रश्नोत्तरप्रदानादेव फलसिद्धिरिति भावः । अध्यक्षं समक्षम् ॥

सत्यमेवमेतत् । तदाकूतं तु न विचारणीयमित्याह— अविचारणीयमिति । निरूप्यमाणे सति प्रश्नोत्तरत्वेनैव वाक्यप्रवृत्तिः, न पुनरन्यथेति नियमोऽस्ति । किन्तु यथा यथा पुरुषार्थो भवति, तथा तथा बोधनीयमित्याकूतम् । भगवद्गीतायास्तव च तथा स्वभाव इति भावः ॥

गृहीतोद्देशैवेति । सर्वथा तामानेष्यामीति निश्चितसङ्कल्पा सा गतेत्यर्थः ॥

ननु न तस्या वार्ताप्याकर्ण्यते, तत् कथमानेष्यतीति पृच्छति— कथमिवेति ।

तद् विष्णुभक्त्यैव समावेदितमुपनिषन्निवासस्थानं ज्ञात्वैव शान्तिर्गतेत्याह — देव प्रागेवेत्यादिना । आवेदनप्रकारमेवास्य दर्शयति—

---

१. 'तु न विवेचनीयमि' क. ग. घ. पाठः. २. 'णेऽपि प्रश्नोत्तरे सति नैव वाक्यप्रवृत्तिः न पुनरन्यथेति न नियमोऽस्ति' घ. पाठः. ३ 'ष्यामीति' ग. पाठः.

यथा मन्दराभिधाने शैले विष्णोरायतने देव्या गीतया सह तर्कविद्याभयादनुप्रविष्टेति ।

**राजा** — कथं पुनस्तर्कविद्याभयम् ।

**श्रद्धा** — देव ! तमेतमर्थं सैव प्रस्तोष्यति । तदागच्छतु देवः । एष स्वामी त्वदागमनमेवानुध्यायन् विविक्ते वर्तते ।

**राजा** — (उपसृत्य) स्वामिन् ! अभिवादये ।

**पुरुषः** — वत्स ! क्रमविरुद्धोऽयं समुदाचारः । यतो ज्ञानवृद्धतया भवानेवास्माकमुपदेशदानेन पितृभावमापन्नः । कुतः —

पुरा हि धर्माध्वनि नष्टसंज्ञा
देवास्तमर्थं तनयानपृच्छन् ।

---

यथा मन्दराभिधान इत्यादिना । अस्ति किल दण्डकारण्ये प्रणीता नाम संसेवितसज्जना कापि नदी । तस्याः परिसरालङ्कारभूते मन्दरनामधेये पर्वते श्रीशार्ङ्गपाणेर्भगवतः पुरुषोत्तमस्यायतने सुतया सह गीतया तार्किकाणां केवलदुस्तर्कधूलिधूसरसन्त्रस्ता तत्र समनुप्रविश्य वर्तत इत्यर्थः ॥

प्रस्तोष्यति कथयिष्यति । एष स्वामी क्षेत्रज्ञः ॥

क्रमविरुद्धोऽयमिति । यद्यपि पुराणत्वाद् वयोवृद्धोऽहं, तथापि 'विद्वान् सर्वत्र पूज्यते' इति न्यायाद् ज्ञानशरीरारम्भकत्वेन पितृत्वाद्भवत एव गुरुत्वमित्यर्थः ।

किञ्चोपदेष्टुर्गुरुत्वं पुराणादिषु प्रसिद्धमित्याह — कुतः पुराहीत्यादिना । पुरा हि परमेष्ठिपुत्रत्वाद् द्युतिमत्त्वाद् दक्षाद्या देवाः पितरं परमेष्ठिनमवधीर्यान्यं देवमयजन् मुमुक्षवः सन्तः । तदसहमानेन पित्रा प्रध्यातास्ते सपदि प्रमुष्टधर्मादितत्त्वस्मृतयोऽभवन् । ततस्तु ते तमेव खिन्नाशयाः पितरं प्रजापतिमेव शरणं गताः । प्रजापतिः पुनः पुत्राणां प्रणतिं प्रेक्ष्य प्रभूतप्रसादः प्रेक्षावानिदमुवाच — हे वत्साः ! यूयमग्निष्वा-

---

१. 'याजयन्' ख. पाठः.

ज्ञानेन सम्यक् परिगृह्य ते वै
तान् पुत्रकाः! संश्रृणुतेत्यवोचन् ॥ १० ॥

तद् भवान् पितृत्वेनास्मासु वर्ततामित्येष एव धर्मः।

**शान्तिः**—एष देवि! देवेन सह स्वामी विविक्ते वर्तते। तदुपसर्पतु देवी।

**उपनिषत्**—(उपसर्पति।)

**शान्तिः**—स्वामिन्! एषोपनिषद्देवी पादवन्दनायागता।

**पुरुषः**—नखलु नखलु। यतो मातेयमस्माकं तत्त्वावबोधोदयेन। तदेषैवास्माकं नमस्या। अथवा,

अनुग्रहविधौ देव्या मातुश्च महदन्तरम्।
माता गाढं निबध्नाति बन्धं देवी निकृन्तति॥११॥

**उपनिषत्**—(विवेकमवलोक्य नमस्कृत्य दूरे समुपविशति।

**पुरुषः**—अम्ब! कथ्यताम्। क्व भवत्या नीता एते दिवसाः।

---

त्तादिपितृगणान् स्वसुतान् प्राप्य धर्माध्वनि नष्टसंज्ञाः धर्मस्वरूपपरिज्ञानरहिताः तेषामुपदेशेन धर्मस्वरूपं साकल्येनावगच्छत इति प्रजापतिनोक्ता दक्षाद्या देवाः प्राप्तधर्मसन्देहाः स्वतनयान् अग्निष्वात्तादीन् पितॄन् तमर्थं सन्दिग्धधर्मादिस्वरूपमपृच्छन् विचारितवन्तः। ते तु पुनः पितरः शास्त्रार्थज्ञानेन यथावत् परिगृह्य सम्यगवगम्य। तान् दक्षादीन् हे पुत्रकाः! संश्रृणुत सम्यक् श्रूयताम् इत्यवोचन् उक्तवन्तः। इत्येवं ज्ञानोपदेष्टुर्गुरुत्वं प्रसिद्धमित्यर्थः॥ १०॥

**अनुग्रहविधा**विति। असारशुक्रशोणितारब्धशरीरस्य मातुरपि तावद् वन्दनीयत्वं प्रसिद्धं,[1] रे किमु वक्तव्यं निरतिशयपुरुषार्थप्रसाधनसम्यग्ज्ञातजनन्या उपनिषद इति भावः॥ ११॥

---

१. 'द्धं कि' क. ग. पाठः.

**उपनिषत्**—स्वामिन् !

नीतान्यमूनि मठचत्वरशून्यदेवा-
गारेषु मूर्खमुखरैः सह वासराणि ।

**पुरुषः**—अथ ते जानन्ति किमपि भवत्यास्तत्त्वम् ।

**उपनिषत्**—नखलु नखलु । किंतु,

ते स्वेच्छया मम गिरां द्रमिडाङ्गनोक्त-
वाचामिवार्थमविचार्य विकल्पयन्ति ॥ १२ ॥

तेन केवलं तेषां परमार्थहरणप्रयोजनमेव मद्विचारणम् ।

**पुरुषः**—ततस्ततः ।

**उपनिषत्**—ततः कदाचित्,

कृष्णाजिनाग्निसमिदाज्यजुहूस्रुवादि-
पात्रैस्तथेष्टिपशुसोममुखैर्मखैश्च ।
दृष्टा मया परिवृताखिलकर्मकाण्ड-
व्यादिष्टपद्धतिरनाध्वनि यज्ञविद्या ॥ १३ ॥

---

**नीतान्यमूनि वासराणीति** । तदुक्तेषु मठादिषु अशुद्धस्थलेषु अनधिकारिभिरध्यापकैः केवलपाठमात्रशरणैः सहेत्यर्थः ।

**द्रमिडाङ्गनोक्तवाचामिति** । नवोढा किल द्रमिडवधूः पातिव्रत्यभङ्गभयात् पत्या सहैव व्यवहराति । अन्यैः[1] पृष्टमपि कमप्यर्थं नालपति । किन्तु दर्दुरिकेवाविशदाक्षरं यत्किमपि धूर्ता जल्पति किल । तस्य चेदृगर्थ इति न निश्चेतुं शक्यम् । एवं पाठकानां कल्पनाप्यनिर्णीतार्थेत्यर्थः ॥ १२ ॥

**अखिलकर्मकाण्डव्यादिष्टपद्धतिरिति** । निखिलकर्मकाण्डापेक्षितक्रियाप्रयोगप्रकारप्रकाशककल्पग्रन्थनिवहः पद्धतिर्यस्याः सा तथोक्ता । अथवा, कर्मविधिप्रकारप्रकाशकमन्त्रब्राह्मणरूपकर्मकाण्डेन व्या-

---

१, 'न्यैः किमपि पृष्टापि अविशदाक्षरं किमपि झिल्लीनद्जल्पति' ग. घ. पाठः.

पुरुषः — ततस्ततः ।

**उपनिषत्** — ततो मया चिन्तितम् । अपि नामैष पुस्तकभारवाहिनी मे ज्ञास्यति तत्त्वमिति । अत एवास्याः सन्निधौ कानिचिद् वासराणि नयामि ।

पुरुषः — ततस्ततः ।

**उपनिषत्** — ततस्तामहमुपस्थिता । तया चाहमुक्तास्मि — भद्रे ! किं ते समीहितमिति । ततो मयोक्तम् — आर्ये ! अनाथास्मि, त्वयि निवस्तुमिच्छामीति ।

पुरुषः — ततस्ततः ।

**उपनिषत्** — ततस्तयोक्तं — भद्रे ! किं ते कर्मेति । ततो मयोक्तं —

यस्माद् विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते
भासा यस्य जगद् विभाति सहजानन्दोज्ज्वलं यन्महः ।
शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं
द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥१४॥

इति ।

---

दिष्टा उपदिष्टा पद्धतिर्मार्गः यस्याः सा तथा । चोदनैकसमधिगम्येत्यर्थः । कृष्णाजिनाद्युपकरणैः परिबृंहितेत्यर्थः ॥ १३ ॥

**यस्मात्** प्रसिद्धात् परमेश्वरात् । विश्वं प्रपञ्चः । उदेति उत्पद्यते । सत्तां स्फूर्तिं च लभत इत्यर्थः । रमते स्थितिं लभते । तत्प्रमाणमाह — **भासा यस्येति** । स्वयमन्यप्रकाशप्रकाश्यं न भवतीत्याह — सहजेति । **शान्तं** सर्वोपद्रवरहितम् । शाश्वतं नित्यम् । अक्रियमविकारि । अपुनर्भावाय निर्वाणाय । ध्वान्तमज्ञानम् । कृतिनः सम्यग्ज्ञानिनः । एवंविधं पुरुषं प्रस्तौमि तात्पर्येण प्रतिपादयामीत्यर्थः ॥ १४ ॥

---

१. 'वेदैक' ख. ग. घ. पाठः. २. 'त्ता' क. पाठः. ३. 'वहते' ग. पाठः. ४. 'मविक्रियमविकारिणम् । अ' क. पाठः.

यज्ञविद्या विचिन्त्य —

पुमानकर्ता कथमीश्वरो भवेत्

क्रिया भवोच्छेदकरी न वस्तुधीः ।

कुर्वन् क्रिया एव नरो भवच्छिदः

शतं समाः शान्तमना जिजीविषेत् ॥ १५ ॥

तन्मन्ये नातिप्रयोजनं भवत्याः परिग्रहेण । तथापि यदि कर्तारं भोक्तारं पुरुषं स्तुवन्ती कियन्तं कालमत्र वस्तुमिच्छसि, ततः को दोषः ।

---

एवं तावन्नित्यमुक्तपरमानन्दस्वरूपं परमेश्वरं प्रतिपादयत्युपनिषदित्युक्तम् । तत्र विरोधं शङ्कते — **विचिन्त्य पुमानकर्ता कथमित्यादिना**। तत्र यदभाणि भूतेश्वरमित्यादिना, तन्न घटनामटतीत्याह – **अकर्ता कथमीश्वर इति** । लोके तावद् राजादीनामनुग्रहादिव्यापारवतामेवेश्वरत्वं दृश्यते, न त्वक्रियावतां पर्वतादीनामतो न तवाभिलषितस्येश्वरत्वमिति भावः ! किञ्च ज्ञानान्मुक्तिरित्यपि ते मनाराज्यमित्याह — **क्रिया भवोच्छेदकरीति** । क्रियैव मुक्तिहेतुरित्यत्र शास्त्रं प्रमाणयति — **कुर्वन् क्रिया इत्यादिना** । यावज्जीवं श्रुतिचोदितत्वाच्चावश्यानुष्ठेयं कर्मवृन्दमिति भावः । उक्तं च—

"कुर्वन्नेव हि कर्माणि शतवर्षं जिजीविषेत् ।

इति मन्त्रोऽपि निश्शेषं कर्माण्यायुरवासृजत् ॥" इति ॥ १५॥

यस्मादेवं कर्मणैव मुक्तिरिति निरणायि, तस्मादसङ्गकूटस्थाद्वितीयपरमेश्वरप्रणयिन्यास्तव परिग्रहेण प्रसाध्यप्रयोजनाभावादपरिग्राह्यैव भवतीति मन्येऽहमित्याह — **तन्मन्ये इत्यादिना** । ननु प्रमाणभूताध्ययनकर्तव्यताविधिपरिप्रापितोपनिषत् कथमुपेक्ष्येति चेदत्राह— **तथापीति** । यदि त्वमात्मनो दुर्विलसितमसङ्गकूटस्थाद्वितीयपरमात्मपक्षपातमपहाय कर्मापेक्षितदेवतादिस्वरूपमभिष्टुवन्ती चेदस्मदानुकूल्यमाचरसि, तर्हि कञ्चित् कालमनुमोदामह इत्यर्थः ॥

---

१. 'द् ब्रह्मादी', २. 'त्रैव या' ख. घ. पाठः.

राज (सोपहासम्) अहो धूमान्धकारश्यामलितदृशो दुष्प्रज्ञत्वं यज्ञविद्यायाः । येनैवं कुतर्कोपहता । यतः,

अयः स्वभावादचलं बलाच्चल-
त्यचेतनं चुम्बकसन्निधाविव ।
तनोति विश्वेक्षितुरीक्षितेरिता
जगन्ति मायेश्वरतेयमीशितुः ॥ १६ ॥

---

अहो वाचालता यज्ञविद्यायाः, यन्निरतिशयपुरुषार्थप्रसाधिकामप्युपनिषदं प्रति फल्गु फलं प्रकाश्यं त्वयेति निर्लज्जं जल्पति, तदियं धूर्तेति मन्वान आह राजा — **सोपहासमि**त्यादिना । सन्ततसम्पाद्यमानाग्निहोत्रादिक्रियाजडतया तत्र बहलधूमपरिम्लानमानसत्वात् स्वात्मानं नाभिजानात्यन्यथा च कलयतीत्यर्थः । उक्तं च —

"इति हृष्टधियां वाचः स्वप्रज्ञाध्मातचेतसाम् ।
घुष्यन्ते यज्ञशालासु धूमेनान्धधियां किल ॥"

इति ।

ननु 'कर्ता शास्त्रार्थवत्त्वात्' (ब्रह्मसू० अध्या० २-३-३३) इत्यादिशास्त्रप्रसिद्धमेव कर्तृत्वादिकमुच्यते, नियन्तृत्वादिकमपि राजादिवदतः कुतः कुतर्कोपहतेत्याशङ्क्याह — **यतः अयः स्वभावा**दित्यादिना । अयमर्थः — यथा चुम्बकस्यायस्कान्तमणेः सान्निधावचलमप्ययो बलात् प्रवर्तते, एवं विश्वेक्षितुः साक्षिण ईक्षितेरिता ईक्षितेन ईरिता प्रेरिता माया चैतन्यसन्निधिबलावष्टम्भेनासत्यप्रपञ्चाकारेण विवर्तते । तदेव चेश्वरस्येश्वरत्वं, यत् स्वसन्निधिबलात् मायाप्रवृत्तिः । यद्यपि लौकिकेश्वराणां क्षुद्रशक्तित्वाद् वाग्व्यापारादिकं दृष्टं, न तत् सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्योदाहरणम् । कर्तृत्वमप्यौपचारिकमेव शास्त्रेऽभिप्रेतम् असङ्गोदासीनकूटस्थचैतन्यस्य मुख्यकर्तृत्वानुपपत्तेः । तस्मात् कर्तृत्वव्यतिरेकेण ईश्वरानुपलब्धिः अज्ञानपटलाच्छन्नत्वादित्यर्थः ॥ १६ ॥

---

१. 'रुप' ख. ग. घ. पाठः. २. 'स्त्रार्थसि' ग. पाठः. ३ 'वि राजानीकमपि रा', ख. घ. पाठः. ४. 'त इति यदेतदे', ५. 'त्वं यत्र' क. पाठः.

तस्मात् तमोन्धानामेवेयमनीश्वरदृष्टिः । अबोधप्रभवं (च) संसारं कर्मभिः शमयन्ती यज्ञविद्या नूनमन्धतमसमन्धकारेणापनिनीषति ।

स्वभावलीनानि तमोमयानि
प्रभासयेद् यो भुवनानि सप्त ।
तमेव विद्वानति मृत्युमेति
नान्योऽस्ति पन्था भवमुक्तिहेतुः ॥ १७ ॥

**पुरुषः** — ततस्ततः ।

**उपनिषत्** — ततो यज्ञविद्यया पुनर्विमृश्योक्तं — सखि! त्वत्सन्निकर्षाद् दुर्वासनोपहतैरस्मदन्तेवासिभिः कर्मसु श्लथादरैर्भवितव्यम् । तत् प्रसीदतु भवती स्वाभिलषितदेशगमनाय ।

---

इदानीं कर्मणामज्ञाननिवर्तकत्वमुक्तं विघटयति — **अबोधप्रभवं चे**त्यादिना ।

"कर्मोपमार्ष्टि नाज्ञानं तमसीवोत्थितं तमः"

इति न्यायात् कर्माज्ञानयोर्विरोधाभावान्न निवर्त्यनिवर्तकभाव इत्यर्थः ।

न केवलं युक्तिरेवात्र शरणं, युक्त्यनुग्राह्या श्रुतिरप्यत्र प्रमाणमित्याह — **स्वभावलीनानी**त्यादिना । स्वभावलीनानि नित्यनिवृत्तानि[1] । तमोमयानि अज्ञानकार्याणि । शुक्तिरजतरज्जुसर्पस्वप्नप्रपञ्चादिवत् कालत्रयेऽप्यनिरूपितरूपाणीत्यर्थः । तमेव विद्वानिति । यः स्वभासा भासयति विश्वं, तं परमात्मानं सकलसाक्षिणं[2] विद्वानवगच्छन्नेव मृत्युमतिक्रामतीत्यर्थः । एवकारेण कर्मादि व्यावर्त्यते । उक्तं च —

"सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिव ।"

इति न्यायात् ज्ञानादेव कैवल्यं न कर्मादिनेत्यर्थः ॥ १७ ॥

**ततो यज्ञविद्यये**ति । कर्मनाशभयात् मां गच्छेत्युक्तवती सेत्यर्थः ॥

---

१. 'निवृत्यंन्तानि तमो' ख. घ. पाठः. २. 'वि तं सकल' घ. पाठः.

पुरुषः — ततस्ततः ।

उपनिषत् — ततोऽहं तामतिक्रम्य प्रस्थिता ।

पुरुषः — ततस्ततः ।

उपनिषत् — ततः कर्मकाण्डविचारिणी सहचरी मीमांसा मया दृष्टा ।

विभिद्य कर्माण्यधिकारभाञ्जि

श्रुत्यादिभिश्चानुगता प्रमाणैः ।

---

कर्मकाण्डः पूर्वकाण्डः । तत्साहचर्यं नाम तदुक्तार्थविचारेण तत्र वर्तनम् ।

इदानीं तस्याः स्वरूपमेव दर्शयति — विभिद्य कर्माणीत्यादिना । कर्माणि विभिद्याङ्गैरभियोजयन्तीत्यन्वयः । तत्र कर्मविभेदस्तावच्छब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयैर्भवति । तत्र शब्दभेदात् तावद् यजति ददाति जुहोतीत्यादिषु यागदानादिकर्मणां भेदः प्रसिद्धः । तथा 'तनूनपातमि'त्यादिषु यजति यजतीत्याद्यभ्यासभेदात् भेदः । सङ्ख्याभेदाच्च 'प्राजापत्याः सप्तदश पशव आलभ्याः' इत्यत्र कर्मणां भेदः । गुणभेदादपि 'आमिक्षा वैश्वदेवी वाजिनं वाजिभ्यः' इत्यत्रामिक्षावाजिनगुणभेदाद् भेदः । तथा प्रक्रियाभेदात् प्रकरणभेदादपि । पूर्वं तावदुपसच्छब्दवाच्यद्वादशेष्टिभिश्चरित्वानन्तरं कुण्डपायिनामयनं नामाग्निहोत्रविशेषो होतव्यत्वेन श्रूयमाणः पूर्वस्मान्नैयमिकक्रतुविशेषादन्य एव प्रकरणभेदान्मासाग्निहोत्रहोम इति क्रतुभेदः । तथा नामधेयभेदादपि । अथ शब्दोपपदसर्वज्योतिर्विश्वज्योतिरित्यादौ नामधेयभेदाद् विश्वज्योतिरित्यादीनां कर्मणां भेदः । एवमेतैः कर्मभेदैः कर्मणां पृथक्त्वं प्रतिपादयन्ती मीमांसा दृष्टेत्यर्थः । कर्माण्येव विशिनष्टि — अधिकारभाञ्जीति ।

---

१. 'न्नैमित्तिक' ग. पाठः. २. 'दकैः क' ग. ङ. पाठः. ३. 'धेः । विधिपुरुषसम्बन्धोऽधिकारस्तं भजन्तीत्यधिकारभाञ्जि । स चाधिकारस्त्रिविधः । नित्याधिकारो नैमित्तिकाधिकारः काम्याधिकारश्चेति । तत्र वर्णाश्रमविशेषप्रयुक्तो नित्याधिकारः । पुत्रस्ते जात इत्यादिषु पुत्रजननादिनिमित्तप्रयुक्तो निमित्ताधिकारः । पश्वादिकामनानियुक्तः काम्याधिकारः । तानि विभिद्य इदं नित्यकर्म इदं नैमित्तिकं कर्म इदं काम्यकर्म । किञ्च' क. पाठ.

अङ्गैर्विचित्रैरभियोजयन्ती
प्राप्तोपदेशैरतिदेशकैश्च ॥ १८ ॥

"बृहस्पतिसवे यद्वत् क्षत्रियो न प्रवर्तते ।
ब्राह्मणत्वादहंमानी विप्रो वा क्षत्रकर्मणि ॥"

इति न्यायान्नित्यनैमित्तिककाम्यविधीनां पुरुषाणां च सम्बन्धः प्रायः। अतो ब्राह्मण्याद्यध्यासादेवाधिकारः, तं भजन्तीत्यधिकारभाञ्जि । स्वर्गपशुपुत्रादिकामिभिरधिकारिभिः क्रियमाणानीत्यर्थः । किञ्च श्रुत्यादिभिश्चानुगता । तत्र श्रुत्यादयस्तावत् — श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याः प्रमाणानि । तत्र पदान्तरनिरपेक्षः शब्दः श्रुतिः । यथा — ऐन्द्र्या ऋचा गार्हपत्यमुपतिष्ठेदित्यन्यानिरपेक्षमेव निर्णयेनोक्तिः । श्रुतसामर्थ्यं लिङ्गम् । यथा — खण्डने योग्यं बर्हिर्देवानां सदनं दामीत्यत्र खण्डनकरणे तत्प्रकाशकयजुर्मन्त्रविनियोगो लिङ्गप्रमाणान्निर्णीयते । तथा आकाङ्क्षासंनिधियोग्यतावन्ति पदानि वाक्यम् । यथा खलु होमकरणभूतजुहूद्रव्यस्य पर्णमयीत्वनिर्णयो वाक्यप्रमाणात् । आरभ्याधीतं प्रकरणम् । यथा — दर्शपूर्णमासप्रकरणपठितानां प्रयाजादीनां प्रकरणप्रमाणात् तदङ्गत्वनिर्णयः ।

"यद्धि प्रकरणे यस्य तत् तदङ्गं प्रचक्षते ।"

इति न्यायादिति । समसङ्ख्यानां यथाक्रमं सम्बन्धः स्थानम् । यथा खलु काम्ययाज्याकाण्डानां मन्त्राणां काम्ययाज्याकाण्डेष्टिभिः सम्बन्धः स्थानप्रमाणादवगम्यते । संज्ञासाम्यं समाख्या । यथा — आध्वर्यवसंज्ञकानां मन्त्राणामाध्वर्यवसंज्ञकैः कर्मभिः सम्बन्धः संज्ञासाम्यप्रमाणनिमित्तः । इत्येवंविधप्रमाणैः कर्मविशेषाणां स्वरूपं विचार्य निर्णयन्ती सेत्यर्थः । किं च विचित्रैरङ्गैः कर्माण्यभियोजयन्ती । तत्राङ्गानां वैचित्र्यं नाम चरुप्रोक्षणादीनां तावत् कर्मस्वरूपनिष्पत्तावुपकारकाङ्गत्वं, प्रयाजादीनां तु स्वर्गादिरूपफलोपकारकत्वम् इत्येवं विचित्रैरङ्गैः समग्राङ्गत्वं कर्मणां सम्पादयन्तीत्यर्थः । अङ्गानामेव वैचित्र्यान्तरं दर्शयति — प्राप्तोपदेशैरित्यादिना । तत्र समग्राङ्गो-

१. 'बर्हिर्म' ङ. पाठः २. 'सहितयो' घ. पाठः. ३. 'त' ख. ग. पाठः.
४. 'ति' ख. पाठः. ५. 'ति स्थानं नाम सम' ग. पाठः. ६. 'था का' ख. पाठः.
७. 'च प्रोक्षणादिभिः स्वरूपोपकारकैः प्रयाजादिभिश्च कर्मफलोपकारकैरित्ये' क. पाठः.

**पुरुषः** — ततस्ततः ।

**उपनिषत्** — ततोऽहं तामपि तथैवाश्रयमभ्यर्थितवती । अथ तयाप्युक्तास्मि — भद्रे! किंकर्मासीति । ततो मया तदेव 'यस्माद्विश्वमि'त्यादि पठितम् ।

**पुरुषः** — ततस्ततः ।

**उपनिषत्** — ततो मीमांसया पार्श्ववर्तिनां मुखमालोक्याभिहितम् — अस्त्येवास्माकं लोकान्तरफलोपभोगयोग्यपुरुषोपनयनेनोपयोगः । तद् ध्रियतां कर्मोपयुक्तेति । तत्र तेषां मध्ये केनाप्यन्तेवासिनैतदनुमोदितमेव । अपरेण तु प्रसिद्धप्रतिष्ठेन मीमांसाहृदयाधिदैवतेन कुमारिलस्वामिनोक्तम् —

---

पेततया पठितेष्वग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धादिषु प्रकृतिभूतेषु क्रतुषु प्राप्तोपदेशैः तत्रैव साकल्येन पठितैः अभियोजयन्ती, तथा विकृतिषु पुनरग्निष्टोमोक्थ्यवाजपेयषोडश्यतिरात्राप्तोर्यामादिष्वश्वमेधान्तेषु विकृतिभूतेषु क्रतुषु 'प्रकृतिवद् विकृतिः कर्तव्ये'ति न्यायाद् विकृतावनुपदिष्टतयातिदेशप्राप्तैरपि कैश्चिदङ्गैः कानिचित् कर्माणि घटयन्ती मीमांसा मया दृष्टेत्यर्थः ॥ १८ ॥

**पार्श्ववर्तिनां मुखमिति** । भाष्यवार्त्तिकटीकाकारादीनां मुखं निरीक्ष्येत्यर्थः । केनाप्यन्तेवासिनेति । शबरस्वामिना खलु स्वर्गकामवाक्यप्रामाण्यान्यथानुपपत्त्या तावद् देहव्यतिरिक्तः कश्चिदिहलोकपरलोकसञ्चारयोग्य आत्माभ्युपगतः । स च मैत्रेयीब्राह्मणकहोलब्राह्मणादिषु श्रुतिषु प्रसिद्धविभवोऽपि अविदितवेदान्तवृत्तान्तानामविज्ञातनिजरूपोऽस्मत्कर्मनिर्वर्तनशेषतयोपयुक्तः । तं प्रसाधयन्ती कियन्तंचित् कालमिहानुकूल्यमाचरत्वित्येवं तेनानुमोदितमित्यर्थः । अथ पुनर्भाष्यकारसूत्रकारादीनामुक्तानुक्तदुरुक्तादिकं चिन्तयता वार्त्तिककारेण प्रकारान्तरमुक्तमित्याह — अपरेण त्वित्यादिना । प्रसिद्धप्रतिष्ठेन प्रतिष्ठितप्रामाण्येन सर्वसम्प्रतिपन्नेनेत्यर्थः । मीमांसाहृदयाधिदैवतेन शास्त्रतात्पर्यार्थविद्योतकसहस्रकिरणेन सर्वज्ञेन कुमारिलस्वामिना

---

१. 'मिहोत्रान्ते' क. पाठः. २. 'त्तान्ताना' घ. पाठः.

देवि! नेयं कर्मोपयुक्तं पुरुषमुपनयति, किन्तु अकर्तारमभोक्तारमीश्वरम्। नचासावीश्वरः कर्मसूपयुज्यते। अथापरेणोक्तम्— अथ किं लौकिकात् पुरुषादन्य ईश्वरो नामास्ति। ततस्तेन विहस्य पुनरुक्तम्— अस्ति। तथाहि—

एकः पश्यति चेष्टितानि जगतामन्यस्तु मोहान्धधी-
रेकः कर्मफलानि वाञ्छति ददात्यन्यस्तु तान्यर्थिने।
एकः कर्मसु शिष्यते तनुभृतां शास्तैव देवोऽपरो
निःसङ्गः पुरुषः क्रियासु स कथं कर्तेति सम्भाव्यते॥

---

भट्टाचार्येणाभिहितमित्यर्थः। तदेव विशदयति— देवि! नेयमित्यादिना। हे मीमांसे! इयमुपनिषन्न कर्मनिर्वहणचणं पुरुषं प्रतिष्ठापयति। किन्तु तद्विपरीतमसङ्गोदासीनसुखस्वरूपमीश्वरम्। अतो भाष्यकारस्यापि युक्तिभिर्नास्तिकपक्षं प्रतिक्षिपतो युक्तिकुशलस्य देहव्यतिरिक्तात्मास्तित्वमेवाभिप्रेतम्। अन्यथा कर्मस्वरूपस्यैवासिद्धिप्रसङ्ग इति भावः। एवं तावद् विशुद्धविज्ञानशा[1]रीरः श्रेयःप्राप्तिहेतुरस्मच्छरीरेन्द्रियसङ्घाताद् विलक्षणो वेदान्तनिषेवणेनाव[2]गम्यनिजरूपः सर्वज्ञ ईश्वरोऽस्तीत्येवं कुमारिलस्वामिनोक्तम्। तदुपश्रुत्यासहमानो गुरुद्रोही[3] प्राभाकरः प्रत्यवतिष्ठते— अथेत्यादिना। अपरेण प्राभाकरेण। कर्तृत्वादिरूपेण लोकप्रसिद्धस्वभावात् पुरुषादन्यः कश्चिदीश्वरो नास्त्यनुपलब्धेरेवेत्युक्तं तेनेत्यर्थः। एवमप्रणतगुरुचरणकन्धरस्य स्वयंगुरोः प्राभाकरस्य पाण्डित्यलालित्यमालक्ष्य सोपहासं भट्टपादैरभिहितमित्याह— ततस्तेनेत्यादिना।

प्रसिद्धपुरुषादन्य ईश्वरोऽस्तीत्युक्तं, तदेव दर्शयति— तथाहि एकः पश्यतीत्यादिना। जगतां जनानाम्। चेष्टितानि कर्माणि। पश्यत्युपलभते। तदनुकूलं[4] फलं च प्रयच्छति। स च नियन्तापि सन् निस्सङ्गः। इतरस्त्वविवेकी कृपणः शास्यः कर्ता। तद्व्यतिरिक्तः ईश्वरोऽस्तीत्यर्थः। उक्तं च—

---

१. 'विज्ञा' ग. पाठः. २. 'निपुणे' ग. पाठः. ३. 'ही प्रभा', ४ 'र्ले च' ग. पाठः.

राजा — (सहर्षम्) साधु कुमारिलस्वामिन् ! साधु । प्राज्ञोऽस्यायुष्मान् भव ।

द्वौ तौ सुपर्णौ सयुजौ सखायौ
समानवृक्षं परिषस्वजाते ।
एकस्तयोः पिप्पलमत्ति पक्व-
मन्यस्त्वनश्नन्नभिचाकशीति ॥ २० ॥

---

"यदीयशक्त्यनाविष्टं जगत् स्पन्दितुमक्षमम् ।
युक्तिभिस्तमपह्नोतुं कः शक्तः परमेश्वरम् ॥"

इति ॥ १९ ॥

साधु समीचीनं कौमारिलदर्शनमिति सभाजयन् अभिहितेश्वरसद्भावप्रकाशकं मन्त्रं प्रदर्शयति राजा विवेकः — साध्वित्यादिना ।

द्वौ जीवपरमात्मानौ । सुपर्णौ सुरनर[1]सूकरयोनिप्रापकपुण्यापुण्यलक्षणं सुष्ठु शोभनं पर्णं पत्रं पक्षः विद्यते ययोः तौ सुपर्णौ । नन्वीश्वरस्य धर्माधर्मसम्बन्धाभावादविक्रियस्यासङ्गस्य कथं पक्षित्वमिति चेद्, नायं दोषः । छत्रिन्यायेनौपचारिकत्वात् पक्षित्वस्य । तथाहि — यथा खलु लोके पथि गच्छतां पान्थानां छत्रिणो गच्छन्तीत्येकेनापि छत्रिणा बहूनां छत्रित्वोपचारो भवति, एवमेकेनापि पक्षिणा द्वौ सुपर्णाविति व्यपदेशः । कालत्रयेऽपि सहैव वर्तमानत्वात् सयु[2]जौ । समानाख्यत्वात् सखायौ । समान एव हृदयपुण्डरीकस्थल एवोपलभ्यमानत्वात् समानतेजस्त्वाद्वा सखायावित्यर्थः । समानं साधारणं वृक्षं विनाशि शरीरमित्यर्थः । ननु जीवकर्मोपार्जित एव देहः कथं साधारणः स्यात् । सत्यम् । तथापीश्वरेण नियम्यतया देहस्य तत्सम्बन्धाद् भवति साधारण्यमिति न विरोध इति । तयोः जीवेश्वरयोर्मध्ये । एको जीवः । पिप्पलं कर्मफलम् । मेर्वादिदेशापेक्षया शरीरपातादिकालापेक्षया च पक्वं परिणतम् आभिमुख्येनोपस्थितमत्ति अनुभवति । अन्यः पुनरीश्वरोऽनश्नन् अभोक्तैव सन् अभिचाकशीति साक्षित्वेन सर्वं संपश्यन् वर्तत इत्यर्थः ॥ २० ॥

---

१. 'रयोनि', २. 'जौ सखायौ' ग. पाठः.

पुरुषः—ततस्ततः ।

उपनिषत्—ततोऽहं मीमांसामभिमन्त्र्य प्रस्थिता ।

पुरुषः—ततस्ततः

उपनिषत्—ततो मया बहुभिः शिष्यैरुपास्यमानास्तर्कविद्या अवलोकिताः ।

काचिद् द्वित्रिविशेषकल्पनपरा न्यायैः परा तन्वती
वादं सच्छलजातिनिग्रहमयैर्जल्पं वितण्डामपि ।
अन्या तु प्रकृतेर्विभज्य पुरुषस्योदाहरन्ती भिदां
तत्त्वानां गणनापरा महदहङ्कारादिसर्गक्रमैः ॥ २१ ॥

पुरुषः—ततस्ततः ।

उपनिषत्—तथैवाहं ताः समुपस्थिता । ताभिश्चानुयुक्तया मया तदेव कर्मोपाहृतं—'यस्माद्विश्वमि'त्यादि । तत्र ताभिः सप्रकाशोपहासमुक्तम्—आः वाचाले ! परमाणुभ्यो

---

तासां तर्कविद्यानां मध्ये काचित् कश्यपपुत्रकल्पिता गुणवद् द्रव्यमित्यादिन्यायैर्द्रव्यगुणादिस्वरूपनिर्णयपरा सद्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः तत्कल्पनपरा । द्वित्रिविशेषकल्पनपरा द्वित्र्यादिबुद्धिहेतुर्विशेषो नाम कश्चिदस्तीति कल्पनपरा । नैयायिकमतानुसारिणीत्यर्थः । अपरा तु कणादभाषिता "प्रमाणतर्कसाधनोपलम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति वादकथालक्षणलक्षितवादकथानिर्णयावसानं तन्वाना । तत्रैवान्या तु "छलजातिनिग्रहस्थानैः पक्षप्रतिपक्षपरिग्रहेणैव क्रियमाणो जल्पः", "स एव प्रतिपक्षस्थापनाहीना वितण्डा" इत्येवंविधं जल्पं वितण्डां च तन्वाना काचिद् वैशेषिकादीनां तर्कमुद्रा दृष्टेत्यर्थः । अन्या तु कापि कपिलकल्पिता अव्यक्तमहदहङ्कारादिक्रमेण तत्त्वं व्यवस्थापयन्ती प्रकृतेः पुरुषस्य भेदमुदाहरन्ती । एवंविधसाङ्ख्यप्रक्रिया च मया विलोकितेत्यर्थः ॥ २१ ॥

---

१. 'नविद्याद' ख. ग. घ. पाठः.

नाम विश्वमुत्पद्यते। निमित्तकारणमीश्वरः। अन्यया तु सक्रोधमुक्तम्—आः पापे! कथमीश्वरमेव विकारिणं कृत्वा विनाशधर्माणमुपपादयसि। ननु रे प्रधानाद् विश्वोत्पत्तिः।

राजा—अहो दुर्मतयस्तर्कविद्या एतदपि न जानन्ति। सर्वं प्रमेयजातं घटादिवत् कार्यमिति परमाणुप्रधानोपादानकारणमप्युपेक्षणीयमेवेति। अपि च,

अम्भःशीतकरान्तरिक्षनगरस्वप्नेन्द्रजालादिवत्
कार्यं मेयमसत्यमेतदुदयध्वंसादियुक्तं जगत्।

---

तत्र ताभिरिति। केवलंकर्कशदुस्तर्कचूर्णधूसरितैः[२] वैशेषिकादितार्किकवटुभिरहमपहसितेत्यर्थः। परमाणुभ्यो नाम विश्वमुत्पद्यत इति। अन्यया तु सक्रोधमिति। सत्त्वरजस्तमसां साम्यावस्था प्रधानम्। लोहितशुक्लकृष्णरूपादजादेतस्मात् प्रधानात् जगज्जायते। पुरुषस्तूदासीन इत्येवं कपिलपक्षप्रणयप्रगल्भतया[३] बहलितक्रोधमभाषीत्यर्थः॥

सर्वं प्रमेयजातं कार्यं भवतु, ततः किमायातमिति चेत्, तत्राह—**परमाणुप्रधानोपादानेति**। परमाण्वादीनामपि प्रमेयत्वात् कार्यकोटिनिक्षिप्तत्वादप्रामाणिकत्वादपहेयत्वमस्य पक्षस्येति भावः।

एवं तावद् वादिपरिकल्पितस्याप्रामाणिकत्वोपपादनेन द्वैतेन्द्रजालस्यानिर्वचनीयत्वमुक्तम्। इदानीं तत्रैवानुमानान्तराण्युपन्यस्यति—**अपि चे**त्यादिना। अम्भःशीतकराणां घटशरावाद्युदकप्रतिबिम्बितपीयूषकिरणानां यथा चन्द्रव्यतिरेकेणाभावः, एवं प्रतिबिम्बकल्पानां जीवानामपि बिम्बकल्पब्रह्मव्यतिरेकेणाभाव इत्येवं चित्प्रपञ्चभेदस्यानृतत्वमित्यर्थः। अधुना जडप्रपञ्चमिथ्यात्वे सम्प्रतिपन्नमुदाहरणमाह—**अन्तरिक्षनगरे**त्यादिना। अन्तरिक्षनगरं गन्धर्वनगरम्। स्वप्नः स्पष्टः। इन्द्रजालो मायाविकृतः। अयं प्रयोगः—विमतं मिथ्या कार्यत्वाद् विभक्तत्वात् प्रमेयत्वादुत्पत्ति-

---

१. 'वटु', २. 'कर्चूर्णितैः', ३. 'ललक्षणप्र' ख. ग. पाठः.

शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरा-
 वज्ञाते प्रभवत्यथास्तमयते तत्त्वावबोधोदयात् ॥ २२ ॥

विकाराशङ्का तु मुग्धवधूनां विलसितमेव । तथाहि—

शान्तं ज्योतिः कथमनुदितानस्तनित्यप्रकाशं
 विश्वोत्पत्तौ व्रजति विकृतिं निष्कलं निर्मलं च ।
शश्वन्नीलोत्पलदलरुचामम्बुवाहावलीनां
 प्रादुर्भावे भवति वियतः कीदृशो वा विकारः ॥ २३ ॥

---

मत्त्वाद् विनाशित्वाच्च प्रतिबिम्बवद् गन्धर्वनगरवत् स्वप्नप्रपन्चवदिन्द्रजालवत् शुक्तिरूप्यवत् स्रक्सर्पादिवच्चेति । ननु विभक्तत्वेनाखिलस्य कार्यत्वे किं पुनस्तर्हि कादाचित्कस्यास्य कारणमित्याकाङ्क्षायामाह—शुक्तौ रूप्यमिवेत्यादिना । तत्त्वमादिमहावाक्यजनितबुद्धिवृत्तिफलकारूढचैतन्यैः परमात्मा सनिदानमेव संसारं हरति हरिः तस्मिन् हरावज्ञाते अविदिते जगत् प्रभवतीति । विष्णुमायाविवर्तं जगदित्यर्थः । तर्हि किं निवर्तकमज्ञानस्येति चेत्, तद्विरोधि तत्त्वज्ञानमित्याह—अथास्तमयत इत्यादिना ॥ २२ ॥

ननु मायाद्वारेणापि कारणत्वाद् विकारित्वं प्राप्तं विष्णोरित्याशङ्क्याह—**विकाराशङ्का** त्वित्यादिना । मुग्धवधूनां विलसितमिति । बालवनितालावण्यलालित्यवदविचारितरमणीयं ।निरवयवस्येश्वरस्य विकारित्वसम्भावनमित्यर्थः ॥

**शान्तं ज्योतिः** । अविद्यातत्कार्यतत्सम्बन्धराहितम् । अनुदितानस्तनित्यप्रकाशमिति । स्वयमुत्पत्त्यादिमन्न भवति ।

"यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम् ।
भूत्वा विलीयते तद्वदात्मनीहाखिलं जगत् ॥"

इति न्यायात् सकलभ्रमाधिष्ठानभूते निष्कलङ्कचैतन्यैकताने वस्तुनि विकाराशङ्का न घटनां प्राप्नतीत्यर्थः ॥ २३ ॥

---

१. 'न्यः परं सवि', २. 'त्वं वि' ग. पाठः

**पुरुषः**—साधु साधु प्रीणयति मानसं ममायं प्रज्ञावतो विमर्शः। (उपनिषदं प्रति) ततस्ततः।

**उपनिषत्**—ततस्ताभिः सर्वाभिरेव क्रुद्धाभिरुक्तम्—अहो विश्वविलयेन मुक्तिमेषा वदन्ती नास्तिकपथं प्रस्थिता निगृह्यतामिति। ततः ससंरम्भं मां निग्रहीतुं प्रधाविताः सर्वाः।

**पुरुषः**—(सत्रासम्) ततस्ततः।

**उपनिषत्**—ततोऽहं सत्वरतरं परिक्रम्य दण्डकारण्यं प्रविष्टा। ततो मन्दरशैलोपकल्पितस्य मधुसूदनायतनस्य नातिदूरे—

बाह्वोर्भग्ना दलितमणयः श्रेणयः कङ्कणानां
चूडारत्नग्रहनिकृतिभिर्दूषितः केशपाशः।
छिन्ना मुक्तावलिरपहृतं स्रस्तमङ्गाद् दुकूलं
भीता गीताश्रममथ गलन्नूपुराहं प्रविष्टा॥ २४॥

**पुरुषः**—ततस्ततः।

**उपनिषत्**—ततो देवतायतनान्निर्गत्य दण्डपाणिभिः पुरुषैरतिनिर्दयं ताड्यमानास्ता दिगन्तमतिक्रान्ताः सर्वाः।

---

**प्रज्ञावतः** विवेकिन इत्यर्थः॥

**मधुसूदनायतनस्य नातिदूरे** गीताश्रमं प्रविष्टाहमित्यन्वयः। तदानीं परित्रस्ताया मे शिथिलान्यङ्गानीत्याह—**बाह्वोर्भग्ना** इत्यादिना॥ २४॥

**ततो देवतायतनादिति**। ततो मामशेषतर्कविद्यादुर्भाषितैर्गजेन्द्रदन्ताभिहतां सल्लकीमिव वेपमानामालक्ष्यागणितकरुणाविधेयहृदयेन भगवता शार्ङ्गपाणिना प्रेषितैर्दण्डपाणिभिः संन्यासिप्रवरैरन्यैश्च पूर्ण-

---

१. 'र्नीं त्र' ग. पाठः. २. 'न श्रीकरुणाकरेण भ' घ. पाठः.

**राजा** — (सहर्षम्) न खलु भवतीमतिक्रामतो भगवान् विश्वसाक्षी क्षमते।

**पुरुषः** — ततस्ततः।

**उपनिषत्** — तत्र च वत्सया गीतया मां तत्रागतामवलोक्य ससंभ्रमं मातर्मातरिति परिरभ्योपनिवेशितास्मि। विदितवृत्तान्तया तया चोक्तम् — अम्ब! नात्र खेदयितव्यं मनः। ये खलु त्वामप्रमाणीकृत्य यथेष्टमसुरसत्त्वाः प्रचरिष्यन्ति, तेषामीश्वर एव शास्ता। उक्तं च तेन भगवता तानधिकृत्य —

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥"

इति।

**पुरुषः** — (सकौतुकम्) देवि! त्वत्प्रसादाज्ज्ञातुमिच्छामि कोऽयमीश्वरो नामेति।

---

निजरूपैः पुरुषैः प्रमाणानुग्राहकैः निशिततरतर्ककुलिशैः निर्दयं ताड्यमानास्तास्तर्कविद्या संसभ्रममितस्ततोः गता इत्यर्थः॥

**ये खलु त्वामप्रमाणीकृत्येति**। मातृकल्पां श्रुतिं त्वामप्रमाणीकृत्य त्वदुक्तमर्थमवधीर्यासुरसत्त्वाः असुषु रमन्ते इत्यसुराः इन्द्रियारामाः, तेषामीश्वर एव नियन्तेत्यर्थः॥

एवं तावद् विष्णुभक्तिप्रसादात् प्रत्यक्प्रवणः पुरुषो "यस्माद्विश्वम्" इत्यादिनाभिहितेश्वरस्वरूपजिज्ञासयोपपन्न इत्याह — देवि! त्वत्प्रसादादित्यादिना।

---

१. 'कल्पाः अ' ख. ग. पाठः. २. 'रस्य स्व' ख. घ. पाठः.

**उपनिषत्**—(सस्मितम्) को नामात्मानमजानन्तं प्रत्युत्तरं दास्यति ।

**पुरुषः**—(सहर्षम्) कथं ममात्मा परमेश्वरः।

**उपनिषत्**—एवमेतत् । तथाहि—

असौ त्वदन्यो न सनातनः पुमान्
भवान्न देवात् पुरुषोत्तमात् परः ।
स एव भिन्नस्तदनादिमायया
द्विधेव बिम्बं सलिले विवस्वतः ॥ २५ ॥

**पुरुषः**—(विवेकं प्रति) भगवन्! उक्तमप्यर्थं भगवत्या न सम्यगवधारयामि ।

---

आत्मानं सन्तं स्वयंप्रकाशसंविदानन्दरूपमीश्वरं कथं न जानासि, अहो बाहिर्मुख्यमित्यभिसन्धायाह—**सस्मित**मित्यादिना। उक्तं च—

"बोधेऽप्यनुभवो यस्य न कथञ्चन जायते ।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥"

इति ।

आत्मानमजानन्तमित्यनेनेश्वरस्यात्मत्वेऽभिहिते प्रत्यगात्मानन्दसम्भ्रमात् पृच्छति—**कथं ममात्मेति** ।

अधुना ते बाहिर्मुख्यमपहस्तितम् । अतः सावधानं श्रूयतामित्याह—**एवमेतत् तथाहीत्यादिना** । **असौ त्वदन्यो नेति** । असावीश्वर एव त्वं त्वमेव चासावीश्वर इत्यन्योन्यव्यवहारेणैकत्वमेवोपदिष्टमित्यर्थः । ननु जीवेश्वरयोर्भेदप्रतीतेर्जीवानां च परस्परभेदात् कथमसावेवाहमित्याशङ्क्याह—**स एव भिन्न इत्यादिना** । बिम्बप्रतिबिम्बादिभेदवद् जीवेश्वरादिभेदभानं भ्रान्तमित्यर्थः ॥ २५ ॥

---

१. 'क्त' ग. घ. पाठः. २. 'सौ विश्व ए' ग. पाठः.

अवच्छिन्नस्य भिन्नस्य जरामरणधर्मिणः ।

मम ब्रवीति देवीयं नित्यानन्दचिदात्मताम् ॥ २६ ॥

विवेकः — पदार्थापरिज्ञानादयं वाक्यार्थानवबोधस्ते ।

पुरुषः — तदवबोधाय भगवानुपायमाज्ञापयतु ।

विवेकः — अयमुच्यते —

एषोऽस्मीति विविच्य नेति पदतश्चित्तेन सार्धं कृते
तत्त्वानां विलये चिदात्मनि परिज्ञाते त्वमर्थे पुनः ।
श्रुत्वा तत्त्वमसीति बाधितभवध्वान्तं सदात्मप्रभं
शान्तं ज्योतिरनन्तमन्तरुदितानन्दं समुद्द्योतते ॥ २७ ॥

---

उपनिषदुक्तार्थासम्प्रतिपत्तिरेव न केवलं, किन्तु विपरीतार्थप्रतिपत्ति-रप्यस्तीत्याह — अवच्छिन्नस्येत्यादिना ॥ २६ ॥

पदार्था(परि)ज्ञानादिति 'हेतुः पदार्थबोधो हि वाक्यार्थावगतेरि'ति न्यायात् पदार्थविवेकः कर्तव्य इत्यर्थः ॥

एषोऽस्मीति । चिदात्मनि त्वमर्थे परिज्ञाते सतीत्यन्वयः । तत्त्वानां शरीरेन्द्रियलक्षणानाम् । विविच्य विचारेण परितः प्रवृत्तेन 'नेति नेती'ति देहमारभ्याहङ्कारपर्यन्तस्य त्वंपदवाच्यस्यानात्मतया निराकरणेन त्वंपदलक्ष्यप्रत्यग्वस्तुन्यवगते सतीत्यर्थः । पुनःशब्दात् तत्पदवाच्ये च जगत्कारणे सर्वज्ञत्वपारोक्ष्यादिपरिहारेण केवलचिद्रूपेऽवगते सतीत्यर्थः । ततः किमिति, तदाह — श्रुत्वा तत्त्वमसीत्यादिना । कृतपदार्थविवेकस्य खलु पुरुषस्य परदेवतागुरुप्रसादलब्धतत्त्वमादिमहावाक्यश्रवणजनितसम्यग्ज्ञानेन बाधितभवध्वान्तं भवः संसारः, ध्वान्तमज्ञानं, कार्यकारणप्रपञ्चलक्षणमज्ञानं बाधितं यथा भवति तथा प्रत्यगात्मानन्दाद्वितीयब्रह्मापरोक्ष्यं भवतीत्यर्थः । उक्तं च —

---

१. 'न परं कि' ख. ग. घ. ङ. पाठः. २. 'रस्यास्ती' ख. ग. ङ. पाठः ३. 'क्षणप्र' ख. घ. पाठः. ४. 'न्युपग' ख. ग. पाठः. ५. 'णलक्षणप्रपञ्चरूपम' ङ. पाठः. ६. 'न्दब्रह्मा' घ. पाठः.

**पुरुषः** — (सानन्दं श्रुतमर्थं परिभावयति ।)

(ततः प्रविशति निदिध्यासनम् ।)

**निदिध्यासनम्** — आदिष्टोऽस्मि भगवत्या विष्णुभक्त्या । यथा — निगूढमस्मदभिप्रायमुपनिषद् विवेकेन सह बोधयितव्या । त्वया च पुरुषेण वस्तव्यमिति । () एषा देवी विवेकपुरुषाभ्यां सह नातिदूरे वर्तते । यावदुपसर्पामि । (उपसृत्य उपनिषदं प्रति जनान्तिकम्) देव्या विष्णुभक्त्या समादिष्टम् । यथा — सङ्कल्पयोनयो देवता भवन्ति । मया च समाधानेन विदितं, तथा आपन्नसत्त्वा भवतीति । तत्र च क्रूर-

"त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ।
वाक्यार्थो व्यज्यते चैव केवलाहंपदार्थता ॥"

इति ॥ २७ ॥

अधुना महावाक्यश्रवणजनितसम्यग्ज्ञानमनुसन्धत्त इत्याह — सानन्दमित्यादिना । श्रुतार्थपरिभावनं नामाचार्यसमीपे स्थित्वा वेदान्तवाक्यानां शक्तितात्पर्य[2]निरूपणम् । तदनन्तरं वस्तुनिष्ठवाक्यापेक्षितया तज्जत्वात् तल्लत्वात् तदनत्वादित्यादिकया परितः प्रवृत्तया युक्त्या श्रुतार्थस्य सम्भावना[3]भावना मननमित्यर्थः ॥

अथ मननोपबृंहितवाक्यार्थविषयस्थिरीभावरूपनिदिध्यासनप्रवृत्तिमाह — ततः प्रविशति निदिध्यासनमित्यादिना ।

**जनान्तिकम्** एकान्तस्थलम् ।

"त्रिपताकं करं कृत्व यत्रान्यस्य मनोगतम् ।
कथयत्यप्रकाशं तु तज्जनान्तिकमुच्यते ॥"

इति । विविक्तस्थले मामाहूयामुमर्थमुपदिष्टवती देवीत्यर्थः । किं तदिति तदाह — सङ्कल्पयोनय इत्यादिना । सङ्कल्पयोनयः सङ्कल्पसिद्धिकाः । तदिदानीं किमिति चेत्, तदाह — मया चेति । समाधानेन सङ्क-

१. 'लानुभवादिह', २. 'र्यालोचनं तावच्छ्रवणं त', ३. 'नादिबुद्धिप्रापकं मनसः संपादयतीति । अथ' क. पाठः.

सत्त्वा विद्या नाम कन्या त्वदुदरे वर्तते प्रबोधचन्द्रश्च । तत्र विद्यां सङ्कर्षणविद्यया मनसि सङ्क्रामयिष्यसि । प्रबोधचन्द्रं पुरुषे समर्प्य वत्सविवेकेन सह मत्समीपमागमिष्यसीति ।

**उपनिषत्** — यदादिशति महादेवी । (इति विवेकमादाय निष्क्रान्ता ।)

**निदिध्यासनम्** — (पुरुषं प्रविशति ।)

**पुरुषः** — (ध्यानं नाटयति ।)

(नेपथ्ये)

आश्चर्यमाश्चर्यम् ।

उद्दामद्युतिदामभिस्तडिदिव प्रद्योतयन्ती दिशः
प्रत्यग्रस्फुटदुत्कटास्थि मनसो निर्भिद्य वक्षःस्थलम् ।

---

ल्पेन । ध्यानेनेति यावत् । आपन्नसत्त्वा अन्तर्वत्नीत्यर्थः । विद्यायाः क्रूरसत्त्वता नाम द्युमणिद्युतिवत् स्वोदयसमसमयमेव ध्वान्ततत्कार्यस्य निर्दयमेव घस्मरत्वम् । एवं स्थिते शाक्ततात्पर्यपर्यालोचनालक्षणयोनिद्वारा सङ्कल्पलक्षणाकर्षणविद्यया सा कन्या मनसि सम्पादनीयेत्याह — सङ्कर्षणविद्ययेत्यादिना । तत्र विद्याया मनसि सङ्क्रमणं नाम वाक्यश्रवणाद् ब्रह्माकारबोधे[1] बुद्धिवृत्त्युत्पत्तिरुच्यते[2] ॥

यदादिशति महादेवीति । परमेश्वर्या महादेव्या यत् सङ्कल्पितं तत् तथा कृत्वेत्यर्थः ॥

निदिध्यासनं पुरुषं प्रविशतीति । एवमाचार्यसमीपे[3] स्थित्वा वेदान्तमहावाक्यात् श्रुतं तदनुकूलयुक्तिभिः सम्यङ्मतं च वस्तु एवमेव नान्यथेति निर्णयेन[4] उक्तः पुरुष इत्यर्थः ॥

पुरुषस्य ध्याननटनं नाम, विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहकरणं हि ध्यानं, तद् भावयतीत्यर्थः ॥

आश्चर्यमिति । अहो विष्णुभक्तेः प्रसादविलसितमित्यर्थः[5] ।

निदिध्यासनं नाटयतीत्युक्तं, तदेव दर्शयति — उद्दामेत्यादिना ।

---

१. 'धेद्धबु' क. ग. पाठः. २. 'द्धिप्रवृ', ३. 'पे वे' ग. पाठः. ४. 'ष्णोक्तिः पु' क. ङ. पाठः. ५. 'र्थः । तदे' ग. पाठः.

कन्येयं सहसा समं परिकरैर्मोहं ग्रसन्ती भज-
त्यन्तर्धानमुपैति चैष पुरुषः श्रीमान् प्रबोधोदयः ॥ २८॥

(ततः प्रविशति प्रबोधचन्द्रः ।)

**प्रबोधचन्द्रः—**

किं व्याप्तं किमपोहितं किमुदितं किं वा समुत्सारितं
स्यूतं किं नु विलायितं नु किमिदं किञ्चिन्न वा किञ्चन

---

उपनिषत्प्रसादान्मनःसकाशान्मनःप्रसादादुत्पद्यमानबोधेद्धा बुद्धिवृत्तिरि कन्येत्युच्यते। सा सहसैव स्वोत्पत्तिमात्रेण परिकरैः कार्यवर्गैः सह मो ग्रसन्ती विनाशयन्ती स्वनिमित्तभिदामपि सलिलविलोलितकतकरजोवत स्वयमेव ग्रसन्ती भजत्यन्तर्धानं विलयं वहतीत्यर्थः। पुनरपि किं कृत्वेति तदाह—निर्भिद्येति। प्रत्यग्र इत्यभिनव उच्यते। अभिनवस्फुटत्। उत्क दृढतरम्। इदं क्रियाविशेषणम्। झटितित्रुट्यद्दृढास्थि यथा भवति तथा मनसो वक्षःस्थलम्। मनःशब्देन हृदयमुच्यते। हृदयग्रन्थिं निर्भिद्येत्यर्थः पुनरपि कीदृशी सेत्याशङ्कायां विशिनष्टि—उद्दामेत्यादिना। उद्दामै रुत्कटैः स्वयंप्रकाशचैतन्यद्युतिसन्दोहैः। दिश इत्युपलक्षणं, "ब्रह्मैवे सर्वम्" इत्येवमाकारेण अखण्डब्रह्म प्रकाशयन्तीत्यर्थः। एवं तावत्

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति॥"

इति न्यायाद् बोधेद्धा ब्रह्माकारबोधवृत्तिलक्षणा कन्या स्वविरोध्यज्ञान तत्कार्यं च निरस्य स्वयमपि ब्रह्मभूयं प्राप्तेत्यभाणि। अधुना तु बुद्धि वृत्तिफलकारूढचैतन्यलक्षणफलस्वरूपं दर्शयति—उपैति चैष पुरु इत्यादिना॥ २८॥

अथ फलप्रवृत्तिप्रकारमेवावेदयति—**ततः प्रविशति प्रबोध चन्द्र** इत्यादिना। अशेषानर्थनिरासकत्वाद् निरतिशयानन्दाविर्भावकत्वा चन्द्रवत् प्रबोधचन्द्रः॥

---

१. 'शादु' क. ग. पाठः. २. 'स्वोदयमा' क. पाठः. ३. 'यं घटती' ग. 'यं व्यादधती' क. पाठः. ४. 'वं समन्ततः इ' ख. घ. पाठः. ५. 'क्यार्थस' घ पाठः. ६. 'धल' ख. घ. पाठः.

यस्मिन्नभ्युदिते वितर्कपदवीं नैवं समारोहति
त्रैलोक्यं सहजप्रकाशदलितं सोऽहं प्रबोधोदयः ॥ २९ ॥

(परिक्रम्य) एष पुरुषः । यावदुपसर्पामि । (उपसृत्य) भगवन्! प्रबोधचन्द्रोऽहमभिवादये ।

पुरुषः — (साह्लादम्) एहि पुत्र! परिष्वजस्व माम् ।

प्रबोधचन्द्रः — (तथा करोति ।)

पुरुषः — (आलिङ्ग्य सानन्दम्) अहो! विघटिततिमिरपटलं संजातम् । तथाहि —

मोहान्धकारमवधूय विकल्पनिद्रा-
मुन्मथ्य कोऽप्यजनि बोधतुषाररश्मिः ।

---

किं व्याप्तं किं विषयीकृतम् । किमपोहितं किमपहस्तितम् । किमुदितं किमुत्पन्नम् । किं वा समुत्सारितं किं वा विनाशितम् । स्यूतं किं नु अनुगतं किं नु । विलायितं किं विलयं प्राप्तं किम् । किमिदं परिदृश्यमानं कीदृक्षम् । किंचित् किमस्ति । न वा किंचन किं वा नास्ति किञ्चिदपि । इत्येवमादि विचिकित्सासरणिं न प्राप्नोति । त्रैलोक्यं प्रपञ्चः । यस्मिन् मयि सम्यग्ज्ञाने समुत्पन्ने सोऽहं फलरूपः प्रबोधचन्द्र इत्यर्थः ॥ २९ ॥

अहो विघटिततिमिरपटलमिति । विष्णुभक्तिप्रसादाद् निवृत्ताशेषानर्थनिरतिशयानन्दं ब्रह्मैवाहमासमित्यर्थः ।

तदेव दर्शयति — मोहान्धकारमित्यादिना । मोह एवान्धकारो मोहान्धकारः, तम् । अवधूय अपहाय । विकल्पः संशयः । वस्त्वनिर्णयरूपत्वान्निद्रावन्निद्रा ताम् । उन्मथ्य उन्मूल्य । कोऽपीत्यवाङ्मनसगोचरः । अजनि सञ्जातः । बोधतुषाररश्मिः सम्यग्ज्ञानहिम-

---

१. 'ऽभ्युदयः इ', २. 'वस्तुनिर्णयाकृ' क. घ. पाठः.

श्रद्धाविवेकमतिशान्तियमादि येन
विष्ण्वात्मकं स्फुरति विष्णुरहं स एषः ॥ ३० ॥

सर्वथा कृतकृत्योऽस्मि भगवत्या विष्णुभक्तेः प्रसादात्। सोऽहं —

सङ्गेन केनाचिदुपेत्य कमप्यपृच्छन्
गच्छन्नतर्कितफलं विदिशं दिशं वा ।
शान्तो व्यपेतभयशोककषायमोहः
सायं गृहे मुनिरहं भवितास्मि सद्यः ॥ ३१ ॥

(ततः प्रविशति विष्णुभक्तिः ।)

**विष्णुभक्तिः**—(सहर्षमुपसृत्य) चिरेण खल्वस्माकं सम्पन्नाः सर्वे मनोरथाः। येन प्रशान्ताराातिं भवन्तमवलोकयामि ।

---

करः । येन प्रबोधचन्द्रेण । श्रद्धाविवेकमतिशान्तियमादिप्रपञ्चः, सर्वं विष्ण्वात्मकं स्फुरति प्रतीयते । सर्वं विष्णुरित्यवगतम् । स परमात्मा एष अपरोक्षः। स एषोऽहमिति फलस्थितिरित्यर्थः॥ ३० ॥

एवमुत्पन्नसम्यग्दर्शनस्याखिलकर्मदाहात् सद्यः शरीरपातप्रसङ्गं परिहरन्नारब्धकर्मवेगबलेन लोकसङ्ग्रहार्थं कञ्चित्कालमवस्थानं दर्शयन् जीवन्मुक्तलक्षणमाह — सोऽहं सङ्गेन केनाचिदित्यादिना। सङ्गेन प्रणयेन। केनचित् पुरुषेण सहोपेत्य कमप्यर्थमपृच्छन् अविचारयन्। गच्छन् प्रयास्यन्। अतर्कितफलम् एतस्यां दिशि गते एतत् फलं भवतीत्यविचिन्तितफलम्। विदिशम् उपदिशं दिशं वा यास्यामीत्यर्थः। शान्तः सर्वस्मादुपरतः। व्यपेतो व्यपगतो द्वितीयनिमित्तं भयं तन्निमित्तः शोकश्च कषायो रागो मोहश्च यस्य मम सोऽहं व्यपेतभयशोककषायमोहः। महाप्रस्थानं परिहरति — सायं गृह इति । परिपूर्णतत्त्वस्य मननान्मुनिर्भवितास्मि। आशरीरपातमेवं क्रियत इत्यर्थः॥ ३१ ॥

एवमुक्तविधजीवन्मुक्तमभिलक्ष्य सम्यग्दर्शनलक्षणा विष्णुभक्तिः प्रवर्तत इत्याह — ततः प्रविशति विष्णुभक्तिरित्यादिना। मनोरथपूर्तिमेव दर्शयति — येन प्रशान्ताराातिमित्यादिना । येन यस्मात्

---

१. 'लप्रासिस्थि' ख. ग. घ. पाठः. २. 'गङ्गान' ग. पाठः.

पुरुषः — देव्या विष्णुभक्तेः प्रसादात् किं नाम दुष्करम् । (इति पादयोः पतति ।)

विष्णुभक्तिः — (पुरुषमुत्थापयति) उत्तिष्ठ वत्स ! । किं ते भूयः प्रियमुपहरामि ।

पुरुषः — किमतः परमपि प्रियमस्ति । यतः —

पूर्वं तावद् विवेकप्रमुखनिजबलैर्निर्जिते सानुबन्धे
मोहेऽस्माकं कुलारौ तदनु समुदिते हन्त वैराग्ययोगे ।
शान्तिश्रद्धादियत्नात् पुनरुपनिषदा साधितात् सम्प्रयोगा-
दस्माभिस्त्वत्प्रसादाद् ध्रुवमयमधुना लब्ध एव प्रबोधः ॥

संसारापारसिन्धुप्लवकुशलमहाकर्णधारे मुरारौ
भक्तिर्मुक्तेः परा सा प्रसरतु जननी सार्वकालं जनस्य ।
किञ्चान्यत् स्वप्रकाशं परतरममलज्योतिरानन्दसान्द्रं
शान्तात्मानो मुनीन्द्राः प्रमुदितमनसः सन्ततं भावयन्तु ॥

प्रशान्तारातिरगमद् विवेकः कृतकृत्यताम् ।
नीरजस्के सदानन्दे पदे चाहं निवेशितः ॥ ३४ ॥

---

प्रकर्षेणोन्मूलितमोहादिलक्षणारातिं भवन्तं पूर्णानन्दरूपं[1] पश्यामि, तस्मात् सम्पूर्णा मे मनोरथा इत्यर्थः ॥

नीरजस्के निवृत्तानर्थे । सदानन्दे परमात्मपदे । निवेशितः अभिषेचितः । यस्मात् सहविवेकस्य मम कृतं कृत्यं प्राप्तं प्रापणीयं, तस्मादतःपरं प्रार्थ्यं नास्तीत्यर्थः ॥ ३४ ॥

---

१. 'र्णनिजरूपं' क. ख. घ. पाठः २. 'तः प्र' ग. पाठः.

तथापीदमस्तु—

(भरतवाक्यम् ।)

पर्जन्योऽस्मिन् जगति महतीं वृष्टिमिष्टां विधत्तां
राजानः क्ष्मां गलितविविधोपप्लवां पालयन्तु ।
तत्त्वोन्मेषापहततमसस्त्वत्प्रसादान्महान्तः
संसाराब्धिं विषयममतातङ्कपङ्कं तरन्तु ॥ ३५ ॥

(इति निष्क्रान्ताः सर्वे)

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि नाटके
जीवन्मुक्तिर्नाम षष्ठोऽङ्कः ॥

---

यद्यप्येवं भगवत्याः प्रसादेन कृतकृत्य एवाहं, तथापि 'प्रत्यक्षदृष्टा देवता सम्प्रसन्ना वरमदातुं नार्हती'ति वचनात् कञ्चिदर्थं समर्थय इत्याह—तथापीदमस्त्वित्यादिना ।

इदानीं प्रार्थनाप्रकारप्रदर्शनेन नाटकार्थमुपसंहरन् आशीर्वादलक्षणं मङ्गलं सम्पादयति—पर्जन्योऽस्मिन्नित्यादिना । इष्टामभिलषिताम् । गलितविविधोपप्लवां प्रभ्रष्टाशेषानर्थाम् । त्वत्प्रसादात् तव भगवत्याः प्रसादात् अनुग्रहात् । महान्तः सज्जनाः तत्त्वापरोक्ष्येणापहततमस्तोमावलीकाः दुरुच्छेद्याहम्ममाभिमानव्याधिजम्बालनिकुरुम्बाकुलं संसाराब्धिं तरन्तु देव्याः प्रसादादित्यर्थः ॥ ३५ ॥

नाट्यपरिसमाप्तिं दर्शयति— निष्क्रान्ताः सर्वे इति ॥

इति श्रीमत्परमहंसपरिव्राजकश्रीमत्प्रकाशतीर्थभगवत्पूज्यपादशिष्येण
गोविन्दामृतभगवता कृते नाटकाभरणे षष्ठोऽङ्कः ॥

---

शुभं भूयात् ॥

# श्लोकानुक्रमणी।

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—**विरूपाक्षपञ्चाशिका Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—**मातङ्गलीला Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—**तपतीसंवरणम् Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—**परमार्थसारम् Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—**सुभद्राधनञ्जयम् Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—**नीतिसारः Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—**स्वप्नवासवदत्तम् Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—**प्रतिज्ञायौगन्धरायणम् Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—**पञ्चरात्रम् Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—**नारायणीयम् Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—**मानमेयोदयः Manameyodaya** (Mīmāṃsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—**अविमारकम् Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—**बालचरितम् Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Śankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—**प्रपञ्चहृदयम् Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—**परिभाषावृत्तिः Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—**सिद्धान्तसिद्धाञ्जनम् Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—**सिद्धान्तसिद्धाञ्जनम्** Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—**गोलदीपिका Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—**रसार्णवसुधाकरः Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—**शाब्दनिर्णयः Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—**स्फोटसिद्धिन्यायविचारः Sphotasiddhinyayavicara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—**मत्तविलासप्रहसनम् Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—**मनुष्यालयचन्द्रिका Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—**रघुवीरचरितम् Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—**सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS | P. |
|---|---|---|---|
| No. 59—**नागानन्दम् Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—**लघुस्तुतिः Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—**सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—**सर्वमतसंग्रहः Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—**किरातार्जुनीयम् Kiratarjuniya** (Kâvya) by Bhâravi with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—**मेघसन्देशः Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—**मयमतम् Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—**महार्थमञ्जरी Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—**तन्त्रसमुच्चयः Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—**तत्त्वप्रकाशः Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 71—**तन्त्रसमुच्चयः Tantrasamuccaya**(Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara(Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—**आश्वलायनगृह्यसूत्रम् Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alankâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra. (Part II.) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** (Mīmāmsa) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6–10 Ullāsas). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 107—काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—बालमार्ताण्डविजयम् **Balamartanda-vijaya** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—न्यायसारः **Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |
| No. 110—आर्यभटीयम् **Aryabhaṭiya** (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan.(Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111—हृदयप्रियः **Hridayapriya** (Vaidyaka) by Parameśvara, | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilo-pakhyana** (Saṅgīta) by H. H. Svāti Śrī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svāti Śrī Rāma Varma Māharaja. | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा **Sahityamimamsa** (Alaṅkāra) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता **Rksamhita** (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādha-vārya) (Part II 2nd Adhyaya in Ist Aṣṭaka.) | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् **Vakyapadiya** (Vyākaraṇa) with the commentary Prakīrṇaka-prakāśa by Helaraja son of Bhutiraja. (Part I). | 1 | 8 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् **Sarasvatikanta-bharana** (Vyākarṇa) by Bhojadeva with the commentary of Śrī Nārā-yaṇa Daṇḍanātha. | 1 | 8 | 0 |

